TRIVANDRUM SANSKRIT SERIES
No. XCIV
Sri Setu Laksmi Prasadamala
No. VI.

श्रीमतङ्गमुनिप्रणीता

# बृहद्देशी

THE

# BRHADDEŚÎ

MATANGAMUNI

EDITED BY
K. SĀMBAŚIVA ŚĀSTRI
*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1928.

TRIVANDRUM SANSKRIT SERIES.
No. XCIV.

Śrî Setu Lakṣmî Prasâdamâlâ.
No. VI.

# THE BṚHADDEŚÎ

OF

# MATANGAMUNI

EDITED BY
K. SÂMBAŚIVA ŚÂSTRÎ,
*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum.*

---

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HER HIGHNESS THE MAHARANI REGENT OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS.
1928.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ९४.

श्रीसेतुलक्ष्मीप्रसादमाला ।

ग्रन्थाङ्कः ६.

---

श्रीमतङ्गमुनिप्रणीता

# बृहद्देशी

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधिता ।

---

सा च

अनन्तशयने

महामहिमश्रीसेतुलक्ष्मीमहाराज्ञीशासनेन

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशिता ।

---

कोलम्बाब्दाः ११०३, क्रैस्ताब्दाः १९२८.

श्रीपद्मनाभसेवि-
न्यखिलश्रीवर्धनी महाराज्ञी ।
श्रीसेतुलक्ष्म्यभिख्या
प्रत्यक्षा जयति वञ्चिभूलक्ष्मीः ॥

ग्रन्थावलिरियमिन्धे
प्रसाधिता तत्प्रसादगुणगुम्फा ।
श्रीसहितसेतुलक्ष्मी-
प्रसादमाला सुवर्णमणिचित्रा ॥

# बृहद्देशीविषयानुक्रमः ।


| विषयः. | पुटम्. |
|---|---|
| देश्युत्पत्तिः | १ |
| देशीलक्षणम | २ |
| नादोत्पत्तिः | २, ३ |
| श्रुतिनिर्णयः | ४–११ |
| स्वरनिर्णयः | ११–२१ |
| मूर्छनाः | २१–२६ |
| तानानां यज्ञनामानि | २६–२८ |
| मूर्छनातानाः | २८–३३ |
| वर्णभेदाः | ३३, ३४ |
| त्रयस्त्रिंशदलङ्काराः | ३४–४९ |
| गीतयः | ४९–५३ |
| जातयः | ५३–८१ |
| रागलक्षणम् | ८१–१०४ |
| भाषालक्षणादि | १०४–१४१ |
| प्रबन्धाध्यायः | १४१–१५४ |

# PREFACE.

Bṛhaddeśī is a work on music by "Sage Matanga". From (1) "मतङ्गस्य वचः श्रुत्वा नारदो मुनिरब्रवीत्" (p. 1) and (2) "श्रीमतङ्गमुनिः प्राह मुनीनुद्दिश्य तद्यथा ।" (p. 141) it would appear that Matanga composed this at the instance of Nārada and other sages. That Matanga was the author is shown by such colophons as "इति मतङ्गमुनिविरचितबृहद्देश्यां प्रबन्धाध्यायः षष्ठः ।". We know nothing of the date of its composition or the particulars of the life of the author Matanga. Kālidāsa however mentions in his Raghuvamsa[1] a sage Matanga who cursed the Gandharva named Priyamvada who might have been arrogant of his skill in music. If this Matanga is identical with the present author, then we may take him to be a Puranic celebrity anterior to the kings of the Raghu line dealt with by Kālidāsa. Matanga is also referred to in the Rāmāyaṇa[2], the Mahābhārata[3], and in the Mātangalīlā[4] No. 10 of the Trivandrum Sanskrit Series; but the question whether he is the same as the author of the present work has to be determined in the light of further research on the subject.

---

1 "मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥
स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसम्प्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥
इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत् स तपोनिधिर्माम् ॥"

(Sarga 5 Slo 53-55)

2 "न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम ।
विविधास्तत्र वै नागा वने तस्मिंश्च पर्वते ।
ऋषेस्तत्र मतङ्गस्य विधानात् तच्च काननम् ॥"

(Aranyakanda Sarga 73. Slo. 28, 29)

3 "अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च ।
यज्वानश्चैव सिद्धाश्च ये च योगशरीरिणः ॥"

(Sabhaparva Adhyaya 8. Slo. 29).

4 "धात्रा यक्षनरासुरामररुचः सङ्गृह्य वाणीव या
सृष्टा सा रुचिरा कदापि विधिना शप्ताथ दुर्गर्वतः ।
तस्मात् सा वसुकन्यका गुणवती नाम्नाभवद् भार्गवात्
सैषाथाश्रममागता बत मतङ्गस्यातिकौतूहलात् ॥"

(p. 3. Slo. 15).

The work ends abruptly saying "इदानीं कथयिष्यामि वाद्यस्य निर्णयो यथा" (p. 154) and so we conclude that there are subsequent parts of the text yet to be discovered.

The author derives the word देशी thus:--

"देशे देशे प्रवृत्तोऽसौ ध्वनिर्देशीति संज्ञितः ।" (p. 1).

"आक्रान्तं ध्वनिना सर्वं जगत् स्थावरजङ्गमम् ॥

ध्वनिस्तु द्विविधः प्रोक्तो व्यक्ताव्यक्तविभागतः ।

वर्णोपलम्भनाद् व्यक्तो देशीमुखमुपागतः ॥" (p. 2).

And from देशी meaning ध्वनि or sound, as a starting point, he developes all that is to follow. Hence the name Bṛhaddesī. This treatise proposes to furnish new information on such subjects as the "courses of Rāga" which as the author observes,

"रागमार्गस्य यद् रूपं यन्नोक्तं भरतादिभिः ।

निरूप्यते तदस्माभिर्लक्ष्यलक्षणसंयुतम् ॥" (p. 81).

have not been dwelt upon by Bharata and other sages in their works. Matanga seeks to base his opinions on authorities by freely quoting passages from Bharata, Kohala Dattila and others.

It is matter for genuine pleasure to announce that we may be able to publish shortly a work on music, named "Dattila" by Dattilācārya who happens to be one of those quoted by the present author.

I would add, before concluding, that the present work though incomplete has been published on account of its rare merit and that the manuscript of this work was Travancore's contribution to the exhibition held at the All India Conference of Scholars and Artists at Indore in 1921.

The edition of the work is based on two palm leaf manuscripts in Malayalam characters obtained from the Poonjar Raja, North Travancore. One of these manuscripts marked क is exceedingly worn out; it is about four centuries old and wanting in the first leaf as well as four leaves from the 41st. The other manuscript marked ख is fragmentary ending with a portion of the Jātiprakaraṇa.

*Trivandrum,*
25-11-1103.

K. SAMBASIVA SASTRI.

# निवेदना ।

---

श्रीमतङ्गमुनिविरचितोऽयं सङ्गीतविषयो ग्रन्थो बृहद्देशी नाम ।

"मतङ्गस्य वचः श्रुत्वा नारदो मुनिरब्रवीत् ।"

(पृ० १. श्लो० २)

"श्रीमतङ्गमुनिः प्राह मुनीनुद्दिश्य तद्यथा ।"

(पृ० १४१. श्लो० ३७७)

इति भागाभ्यां श्रीमतङ्गेन नारदादीनुद्दिश्य निबद्धोऽयं प्रतिभाति । 'इति मतङ्गमुनिविरचितबृहद्देश्यां प्रबन्धाध्यायः षष्ठः' इत्यादिश्च तत्र तत्र परिसमाप्तौ दृश्यमानो भागोऽस्य मतङ्गमुनिप्रणीतत्वं प्रकटयति । अस्य मतङ्गमुने-र्जीवितसमयादिकं प्रति विशिष्य न किमप्यवगम्यते ।

परन्तु महाकविश्रीकालिदासकृते रघुवंशे —

"मतङ्गशापादवलेपमूलादवाप्तवानस्मि मतङ्गजत्वम् ।
अवेहि गन्धर्वपतेस्तनूजं प्रियंवदं मां प्रियदर्शनस्य ॥
स चानुनीतः प्रणतेन पश्चान्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसंप्रयोगाच्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥
इक्ष्वाकुवंशप्रभवो यदा ते भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना तदेत्यवोचत् स तपोनिधिर्माम् ॥"

(रघु० स० ५. श्लो० ५३—५५)

इति दृश्यमानया दिशा गानविद्यागर्वविवशस्य गन्धर्वराजतनूजस्य प्रियंवदस्य शप्ता मोक्ता च मतङ्गमहर्षिर्विद्यासाम्याद् यद्यस्मद्बृहद्देशीप्रणेता मतङ्गमुनिरेव स्यात् तदा रघुवंशराजेभ्योऽप्यतिप्राचीनोऽयं कोऽपि पुराणकथापात्रं महर्षिरिति सिध्यति । स चाप्ययं— श्रीमद्वाल्मीकीये रामायणे ।

"न तत्राक्रमितुं नागाः शक्नुवन्ति तमाश्रमम् ।
विविधास्तत्र वै नागा वने तस्मिंश्च पर्वते ॥
ऋषेस्तत्र मतङ्गस्य विधानात् तच्च काननम् ॥"

(आर० स० ७३. श्लो० २८,२९)

इति,

महाभारते

"अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च ।
यज्वानश्चैव सिद्धाश्च ये च योगशरीरिणः ॥"

(सभा० अ० ८. श्लो० २९)

इति ।

अस्मदधिकरणप्रकाशितायां मातङ्गलीलायां—

"धात्रा यक्षनरासुरामररुचः संगृह्य वार्णीव या
सृष्टा सा रुचिरा कदापि विधिना शशाप दुर्विंतः ।
तस्मात् सा वसुकन्यका गुणवती नाम्नाभवद् भार्गवात्
सैषाथाश्रममागता बत मतङ्गस्यातिकौतूहलात् ॥"

इति च प्रस्तुतान्मतङ्गमुनेरन्यो वा नवेति विमर्शस्तु सामग्र्यन्तरसमुपलब्धिं प्रतीक्षते ।

"इदानीं कथयिष्यामि वाद्यस्य निर्णयो यथा ।"

इति प्रबन्धाध्यायान्तिमेनांशेनास्य ग्रन्थस्यावशेषं किमप्यस्तीति प्रतीयते ।

"देशे देशे प्रवृत्तोऽसौ ध्वनिर्देशीति संज्ञितः ।"

(पृ० १. श्लो० २)

"आक्रान्तं ध्वनिना सर्वं जगत् स्थावरजङ्गमम् ॥
ध्वनिस्तु द्विविधः प्रोक्तो व्यक्ताव्यक्तविभागतः ।
वर्णोपलम्भनाद् व्यक्तो देशीमुखमुपागतः ॥"

(पृ० २. श्लो० ११, १२)

इति देशीसंज्ञिताद् ध्वनेः सर्वस्यास्योपरि वक्ष्यमाणस्य प्रपञ्चावस्थामुपगुम्फता निबन्धस्यास्य **बृहद्देशी**ति संज्ञा स्थाने कृता ।

"रागमार्गस्य यद् रूपं यन्नोक्तं भरतादिभिः ।
निरूप्यते तदस्माभिर्लक्ष्यलक्षणसंयुतम् ॥"

(पृ० ८१. श्लो० २७९)

इत्यनुक्रमेण **भरतादिभि**रपि चिरन्तनैर्महर्षिभिरनुक्तस्य रागमार्गरूपस्य निरूपणादत्राधिक्षितमन्यानुक्तकथनमपूर्वो लाभः ।

श्रीभरत-कोहल-दत्तिलादीनां प्राचामाचार्याणां शास्त्राणि प्रमाणयन् मतङ्गोऽयं बहुत्र स्वीयमेनं ग्रन्थं समूलं निगमयति च। तत्रान्यतमं दत्तिलाचार्यप्रणीतं दत्तिलं नाम गान्धर्वशास्त्रसंक्षेपात्मकं शास्त्रमचिरादिह प्रचिकाशयिषोर्मे मन्ये सापि कापि धन्यता संनिधाता।

ग्रन्थोऽयमस्मदुपलब्धायां मातृकायां सावशेषोऽप्यपूर्वतामहिम्नावश्यप्रकाश्यतां प्राप्तः।

इण्डोर्‌राज्यप्रवृत्ते क्वचन महनीये समस्तभारतीयकलावत्सम्मेलनभवे प्रदर्शनेऽत्रत्यामात्यस्य प्रधानसहकृत्वमुखेन संप्रेप्य सन्निधापितोऽयं तथापि सुप्रसिद्धः।

एतत्संशोधनाश्रयौ द्वावादर्शौ वञ्चिराज्यान्तर्गतपूञ्ञार्‌राजसम्बन्धिनौ केरलीयलिपी तालपत्रात्मानौ। तयोरेकः क-संज्ञितः प्रायश्चतुश्शतवर्षपर्युषितोऽतिजीर्णत्रुटितबहुपत्रः। तत्र च प्रथममेकम् एकचत्वारिंशादाचतुश्चत्वारिंशं चतुष्टयमिति पञ्च पत्राणि लुप्तानि। अन्यः ख-संज्ञितोऽल्पो जातिप्रकरणैकदेशेन विश्रान्तः।

अनन्तशयनम्,
२५-१०-११०३.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

श्रीमतङ्गमुनिप्रणीता

# बृहद्देशी ।

---

*..................................................................

..................................................................

नानाविधेषु देशेषु जन्तूनां सुखदो भवेत् ।
ततः प्रभृति लोकानां नरेन्द्राणां यदृच्छया ॥ १ ॥
देशे देशे प्रवृत्तोऽसौ ध्वनिर्देशीति संज्ञितः ।
मतङ्गस्य वचः श्रुत्वा नारदो मुनिरब्रवीत् ॥ २ ॥
ननु ध्वनेस्तु देशीत्वं कथं जातं महामुने ! ।
अमूर्तत्वाच्च तेषां हि इति मे वक्तुमर्हसि ॥ ३ ॥

मतङ्ग उवाच —

यथानुभूतदेशाच्च ध्वनेः स्थानानुगादपि ।
ततो बिन्दुस्ततो नादस्ततो मात्रास्त्वनुक्रमात् ॥ ४ ॥
वर्णास्तु मात्रकोद्भूता मात्रका द्विविधा मताः ।
स्वरव्यञ्जनरूपेण जगज्ज्योतिरिहोच्यते ॥ ५ ॥
स्व(र्यु ? र्य)ते देशभाषायामादिक्षान्तं यथाविधि ।
तेन स्वराः समाख्याता अन्ये षड्जादयः स्वराः ॥ ६॥
व्यञ्जनत्वं तु सर्वेषां कादिवर्गेषु संस्थितम् ।
शक्त्यभिव्यक्तिमात्रेण व्यञ्जनं शिवतां गतम् ॥ ७ ॥

---

* आदर्शे प्रथमं पत्रं लुप्तम् ।

G. P. T. 13. 500. 17-9-102. B

पदवाक्यस्वरूपेण वाक्यार्थवहनेन यत्।
*वर्णो यत्र (?) जगत् सर्वं तेन वर्णाः प्रकीर्तिताः ॥ ८ ॥
वर्णपूर्वकमेतद्धि पदं ज्ञेयं सदा बुधैः ।
पदैस्तु निर्मितं वाक्यं क्रियाकारकसंयुतम् ॥ ९ ॥
ततो वाक्यान्महावाक्यं वेदाः साङ्गा ह्यनुक्रमात् ।
व्यक्तास्ते ध्वनितः सर्वे ततो गान्धर्वसम्भवः ॥ १० ॥
ध्वनिर्योनिः परा ज्ञेया ध्वनिः सर्वस्य कारणम् ।
आक्रान्तं ध्वनिना सर्वं जगत् स्थावरजङ्गमम् ॥ ११ ॥
ध्वनिस्तु द्विविधः प्रोक्तो व्यक्ताव्यक्तविभागतः ।
वर्णोपलम्भनाद् व्यक्तो देशीमुखमुपागतः ॥ १२ ॥

इति देश्युत्पत्तिप्रकरणम् ।

---

अबलाबालगोपालैः क्षितिपालैर्निजेच्छया ।
गीयते सानुरागेण स्वदेशे देशिरुच्यते ॥ १३ ॥
निबद्धश्चानिबद्धश्च[1][2] मार्गोऽयं द्विविधो मतः ।
आलापादि(?)निबन्धो यः स च मार्गः प्रकीर्तितः ॥१४॥
एवम्प्रकारो देशी यः ज्ञातव्या गीतकोविदैः ।
एवमेतन्मया प्रोक्तं देश्या उत्पत्तिलक्षणम्[3] ॥ १५ ॥

इति देशीलक्षणम् ।

---

इदानीं सम्प्रवक्ष्यामि नादलक्षणमुत्तमम् ।
न नादेन विना गीतं न नादेन विना स्वराः ॥ १६ ॥

---

१., २. 'न्ध', ३. 'मु' ख. पाठः.

---

* 'वर्णयन्ति' इति पाठः स्यात् ।

न नादेन विना नृत्तं तस्मान्नादात्मकं जगत् ।
नादरूपः स्मृतो ब्रह्मा नादरूपो जनार्दनः ॥ १७ ॥
नादरूपा परा शक्तिर्नादरूपो महेश्वरः ।
यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यः स्मृतः ॥ १८ ॥
तन्मध्ये संस्थितः प्राणः प्राणाद् वह्निसमुद्गमः ।
वह्निमारुतसंयोगान्नादः समुपजायते ॥ १९ ॥
नादादुत्पद्यते बिन्दुर्नादात् सर्वं च वाङ्मयम् ।

इति केचित् ।

कन्दस्थानसमुत्थो हि स च पञ्चविधो भवेत् ॥ २० ॥
सूक्ष्मश्चैवातिसूक्ष्मश्च समीरः सञ्चरन्नधः ।
ऊर्ध्वं च कुरुते सर्वां नादपद्धतिमुद्धताम् ॥ २१ ॥

इत्यन्ये वदन्ति ।

नकारः प्राण इत्याहुर्दकारश्चानलो मतः ।
नादस्य द्विपदार्थोऽयं समीचीनो मयोदितः ॥ २२ ॥
नादोऽयं नदतेर्धातोः स च पञ्चविधो भवेत् ।
सूक्ष्मश्चैवातिसूक्ष्मश्च व्यक्तोऽव्यक्तश्च कृत्रिमः ॥ २३ ॥
सूक्ष्मो नादो गुहावासी हृदये चातिसूक्ष्मकः ।
कण्ठमध्ये स्थितो व्यक्तः अव्यक्तस्तालुदेशके ॥ २४ ॥
कृत्रिमो मुखदेशे तु ज्ञेयः पञ्चविधो बुधैः ।
इति तावन्मया प्रोक्ता नादोत्पत्तिर्मनोहरा ॥ २५ ॥

इति नादोत्पत्तिः ।

---

१. 'पस्ततो', २. 'रा ॥ इदा' ख. पाठः.

इदानीं तु प्रवक्ष्यामि श्रुतीनां च विनिश्चयम् ।
श्रु श्रवणे चास्य धातोः क्तिप्रत्ययसमुद्भवः ॥ २६ ॥
श्रुतिशब्दः प्रसाध्योऽयं शब्दज्ञैर्भावसाधनः ।

श्रूयन्त इति श्रुतयः । सा चैकानेका वा । तत्रैकैव श्रुतिरिति । तद्यथा — तत्रादौ तावदिहाग्निपवनसंयोगात् पुरुषप्रयत्नप्रेरितोर्ध्वं नाभेरूर्ध्वाकारदेशमाक्रामद् धूमवत् सोपानपदक्रमेण पवनेच्छया आहाहरोहन्नतर्भूतपूरणप्रातिनिपार्यापाद्यतया(?) श्रुत्यादिभेदभिन्नः प्रतिभास इति मामकीयं मतम् । अन्ये पुनर्द्विप्रकाराः श्रुतीर्भन्यन्ते । कथम् । स्वरान्त(र)विभागात् । तथाच विश्वावसुः—

"श्रवणेन्द्रियग्राह्यत्वाद् ध्वनिरेव श्रुतिर्भवेत् ।
सा चैकापि द्विधा ज्ञेया स्वरान्तरविभागतः ॥
नियतश्रुतिसंस्थानाद् गीयन्ते सप्त गीतिषु ।
तस्मात् स्वरगता ज्ञेयाः श्रुतयः श्रुतिवेदिभिः ॥
अन्तःश्रुतिविवर्तिन्यो ह्यन्तरश्रुतयो मताः ।
एतासामपि चैश्वर्यं क्रियाग्रामविभागतः ॥"

केचित् स्थानत्र(यं ? य)योगात् त्रिविधां श्रुतिं प्रतिपद्यन्ते । अपरे त्विन्द्रियवैगुण्यात् त्रिविधां श्रुतिं मन्यन्ते । इन्द्रियवैगुण्यं च त्रिविधं — सहजं दोषजम् अभिघातजं चेति । अपरे तु वातपित्तकफसन्निपातभेदाभिन्नां चतुर्विधां श्रुतिं प्रतिपेदिरे । तथाचाह[1] चतुरः(?)—

१. 'ह — उ' ख. पाठः.

"उच्चैस्तरो ध्वनी रूक्षो विज्ञेयो वातजो बुधैः ।
गम्भीरो घन(नी ? शी)लश्च ज्ञातव्यः पित्तजो ध्वनिः ॥
स्निग्धश्च सुकुमारश्च मधुरः कफजो ध्वनिः ।
त्रयाणां गुणसंयुक्तो विज्ञेयः सन्निपातजः ॥"
अपरे तु........न्धादयो नवधा श्रुतिं प्रतिपद्यन्ते ॥ २७ ॥

तथाहि—
द्विश्रुतिस्त्रिश्रुतिश्चैव चतुःश्रुतिक एव च ।
स्वरप्रयोगः कर्तव्यो वंशे छिद्रगतो बुधैः ॥ २८ ॥

भरतेनाप्युक्तं—
"द्विक(स्त्रि ? त्रि)कचतुष्कास्तु ज्ञेया वंशगताः स्वराः ।
इति तावन्मया प्रोक्ताः सवंशश्रुतयो नव ॥"

तत्र केचिन्मीमांसामांसलितधियो धीरा द्वाविंशतिश्रुती(यो ?)र्मन्यन्ते । केचन पुनः (षट्)षष्टिभेदभिन्नाः श्रुतय इति मन्यन्ते । अन्ये पुनरानन्त्यं वर्णयन्ति श्रुतीनाम् । यथाचाह कोहलः—
"द्वाविंशतिं केचिदुदाहरन्ति (श्रुतीः)श्रुतिज्ञानविचारदक्षाः ।
षट्षष्टिभिन्नाः खलु केचिदासामानन्त्यमेव प्रतिपादयन्ति ॥"

ननु श्रुतेः किं मानम् । उच्यते । पञ्चमस्य श्रुत्युत्कर्षापकर्षाभ्यां मार्दवादायतत्वाद्वा यदन्तरं (तु ? तत्) प्रमा(णां?णं) श्रु(ति ? ते)रिति । इदानीं द्वाविंशतिप्रकारतोया निदर्शनं यथा—द्वे वेणी तुल्यप्रमाणे तन्त्र्युपपादनं दण्डमूर्च्छना समे कृत्वा षड्जग्रामाश्रिते कार्ये । तयोरन्यतरस्यां मध्यम-

१. 'त', २. 'स्या' ख. पाठः.

ग्रामिकीं श्रुतिं कृत्वा पञ्चमस्यापकर्षात् तामेव श्रुतिं पञ्चमवशात् षड्जग्रामिकीं कुर्यात् । एवं श्रुत्यपकृष्टा भवति, परं विशेषलाभो नास्ति, उच्चनीचमात्रप्रतीतेः । पुनरपि तद्वदेवापकर्षयेत् । यथा गान्धारनिषादौ कर्तारौ पुनरन्यतरस्यां स्थि(त ? र)वीणायां धैवतर्षभौ कर्मतामापन्नौ (प्र) वेक्ष्य (तद्विश्रुत्येऽङ्घ्र्योः सिकलात् ?) पुनरपि तद्वदेवापकृष्टायां चलवीणायां धैवतर्षभौ इतरस्यां पञ्चमषड्जौ प्रवेक्ष्य तत् त्रिश्रुत्य(भि ? भ्य)धिकत्वात् पुनरपि तद्वदेवापकृष्टायां पञ्चममध्यमषड्जा इति । अस्यां मध्यमगान्धारनिषादा(न् ? :) प्रविशन्ति चतुःश्रुत्य(भि? भ्य)धिकत्वात् । एवमनेन दर्शनेन द्वाविंशतिश्रुतयो भवन्ति । एवं मध्यमग्रामे द्रष्टव्यम् । प्रस्तारो यथा —

चलवीणा ध्रुववीणा

| | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | स | | | रि | | ग | ग | | म | म | | प | | प | | ध | ध | | नि |
| | | स | | | रि | | ग | ग | | म | म | | प | | प | | ध | ध | | नि | |
| | स | | | रि | | ग | ग | | म | म | | प | | प | | ध | ध | | नि | | |
| स | | | रि | | ग | ग | | म | म | | प | | प | | ध | ध | | नि | | | |

चलवीणायाः प्रथमापकर्षे श्रुतिलाभो नास्ति । द्वितीये च(दण्डम ? तु:)श्रुतिलाभः । (चतुर्थे द्वादशश्रुतिलाभः । एवं द्वाविंशतिभेदभिन्नाः श्रुतयस्त्रिषु स्थानेषु प्रत्येका वा द्वाविंशतिप्रकारतया श्रुतिलाभः । ?) तृतीये षट्श्रुतिलाभः । चतुर्थे द्वादशश्रुतिलाभः । एवं द्वाविंशतिभेदभिन्नाः श्रुतयो

१. 'भ्यः ख. पाठः.

दर्शिताः । इदानीं षट्षष्टिभेदभिन्नाः श्रुतयः कथ्यन्ते। मन्द-मध्यमतारेषु उरःकण्ठशिरस्सु त्रिषु स्थानेषु प्रत्ये(का ? कं) द्वाविंशतिप्रकारतया भिद्यमानेषु श्रुतयो हि षट्षष्टिभेदभिन्ना भवन्तीति केचिन्मन्यन्ते । अधुना श्रुतीनामानन्त्यं दर्शयामः ।

आनन्त्यं तु श्रुतीनां तु दर्शयन्ति विपश्चितः ।
यथा ध्वनिविशेषाणामानन्त्यं गगनोदरे ॥ २९॥

उ(त्तारुग ? च्चण्ड)पवनोद्वेगजलराशिसमुद्भवाः ।
(कि)यन्तः प्रतिपद्यन्ते न तरङ्गपरम्पराः ॥ ३०॥

इति श्रुतीनामानन्त्यं दर्शितम् ।

इदानीं श्रुतीनां तादात्म्यादिविकल्पः कथ्यते —

तादात्म्यं च विवर्तत्वं कार्यत्वं परिणामिता ।
अभिव्यञ्जकता चापि श्रुतीनां परिकथ्यते[1] ॥ ३१ ॥

इदानीमेतदेव विवृणोति —

विशेषस्पर्शशून्यत्वाच्छ्रवणेन्द्रियग्राह्यता ।
स्वरश्रुत्योस्तु तादात्म्यं जातिव्यक्त्योरिवानयोः॥ ३२॥

नराणां च मुखं यद्वद् दर्पणे तु विवर्तितम् ।
प्रतिभाति स्व(रन्त ? रस्त)द्वच्छ्रुतिष्वेव विवर्तितः ॥ ३३॥

श्रुतीनां श्रुतिकार्यत्वमिति केचिद् वदन्ति हि ।
मृत्पिण्डदण्डकार्यत्वं घटस्येह यथा भवेत् ॥ ३४॥

श्रुतयः स्वररूपेण परीणमति (?) न संशयः ।
परिणमेत (?) यथा क्षीरं दधिरूपेण सर्वथा ॥ ३५॥

१. 'ल्प्य' ख. पाठः.

षड्जादयः स्वराः सप्त व्यज्यन्ते श्रुतिभिः सदा ।
अन्धकारस्थिता यद्वत् प्रदीपेन घटादयः ॥ ३६ ॥

इति तावन्मया प्रोक्तं श्रुतीनां च विकल्पनम् ।
इदानीं संप्रवक्ष्यामि विकल्पस्य च दूषणम् ॥ ३७ ॥

भेदः स्वरलक्षणानां (?) सामान्येनान्यवस्तुवत् सिद्धः ।
तद्धि विशेषैः शून्यं भवति नभःपुष्पसङ्काशम् ॥ ३८ ॥

नानाबुद्धिप्रसाध्यत्वात् स्वरश्रुत्योस्तु भिन्नता ।
आश्रयाश्रयिभेदाच्च तादात्म्यं नैव सिध्यति ॥ ३९ ॥

यदभाणि विवर्तत्वं श्रुतीनां तदसङ्गतम् ।
विवर्तत्वे स्वराणां हि भ्रान्तिज्ञानं प्रसज्यते ॥ ४० ॥

कार्यकारणभावस्तु स्वरश्रुत्योर्न सम्भवेत्
श्रुतीनामिह[1] सद्भावे प्रमाणं नैव विद्यते ॥ ४१ ॥

अर्थापत्त्या(य?) यदिवा व्याप्तिग्रहणपूर्वकप्रमाणबलात् (?) ।
सिद्धस्वरजनकानां गगनगुणानां स्वरो भेदः ॥ ४२ ॥
सत्यम् ।

कार्यकारणभेदोऽस्ति यद्यपि स्फुटमेव हि ।
तथापि कारणत्वं च श्रुतीनां नैव सम्भवेत् ॥ ४३ ॥

कार्येषु विद्यमानेषु कारणे[2]स्योपलम्भनात् ।
घटादौ वि[3]द्यमाने (षु?तु) मृत्पिण्डो नोपलभ्यते ॥ ४४ ॥

परिणामोऽभिव्यक्तिस्तु (ना? न्या)य्यः पक्षः सतां मतः ।
इति तावन्मया प्रोक्तं तादात्म्यादिविकल्पनम् ॥ ४५ ॥

---

१. 'व' ख. पाठः. २. 'णे' क. पाठः. ३. 'भि' ख. पाठः.

न(तु ? नु) श्रुतीनां द्वाविंशतिप्रकारता यत् त(दाप ? दप्य)सङ्गतं, श्रुतीनां श्रुत्यवयवानां चानुलम्भात्। तदुक्तं—

कथं प्रतीतिश्च भवेदमुष्या
नादौ नभोघाकुलितश्रुतित्वात्।
भवेदलक्ष्यावयवा श्रुतिस्तु
+++ नैवावयवी प्रतीता(?) ॥ ४६॥

तासां भवतीताः स्युः (क्य ? किय)त्यो[1] मात्रकाः प्रती(?)।
यदि द्वाविंशतिस्तासां व्यापारः कः क्रमोत्क्रमात ॥ ४७॥
श्रुतीनां यद्यनन्त्यं च + निवार्यं प्रसज्यते(?)।
एकत्वं वा भवेत् तस्यां मात्रकाणामसंशयम् ॥ ४८ ॥
मात्रका एव नो सन्ति कथं तासां विकल्पनम्।
सति धर्मिणि धर्माणां (चाते ? सत्ते)त्याहुर्मनीषिणः ॥४९॥
+ + + + + धर्माणः सन्तोऽप्याहुर्मनीषिणः।
सत्त्वासत्त्वे सदा गुणदोषाणां गुणौ तु यदा(?) ॥ ५० ॥
विनैव कारणं ता(ता ? स्ताः) स्वराणां कारणं यदि।
भवेयुः श्रुतयस्तासामादिर्नेष्येत कारणम् ॥ ५१ ॥
किञ्च प्रमाणगम्यत्वे समेऽपि यदि मात्रकाः।
निह्नोतव्या(त ? स्त)दा रक्षा श्रुतीनामपि दुर्ल(भाः ? भा)॥

अत्रोच्यते—

अर्थापत्त्यानुमानेन प्रत्यक्षज्ञानतोऽपि वा।
गृह्यन्ते श्रुतयस्तावत् स्वराभिव्यक्तिहेतवः ॥ ५२ ॥

१. 'ति' ख. पाठः.

एतदेव स्पष्टीकरणार्थं प्रस्तारेण दर्शयामि । तत्र केचिद् दण्डप्रस्तारेण दर्शयन्ति द्वाविंशतयः(?) श्रुतयो रेखाणामिति । अन्ये तु वीणाप्रस्तार्यमाहुः । वयं पुनर्मण्डलप्रस्तारं ब्रूमः । तथाहि—तिर्यगूर्ध्वं च पञ्च षड् रेखा इत्येकादश । उभयतो द्वाविंशतिः । एवं ग्रामद्वयेऽप्युपयोगिन्यः श्रुतय इति दर्शिताः । तद्यथा —

त्रिश्रुतिरिति क्रम्यादौ(?) देयः षड्जश्चतुःश्रुतिः ।
तदूर्ध्वं द्वे श्रु(तित्वा?ती त्यक्त्वा) तृतीय ऋषभो मत(म्?ः)॥
ततश्चैकां श्रुतिं त्यक्त्वा गान्धारो द्विश्रुतिः स्मृतः ।
तदनु त्रिश्रुतीस्त्यक्त्वा कर्तव्यो मध्यमस्वरः ॥ ५५ ॥
तदूर्ध्वं पञ्चमः कार्यः परित्यज्य श्रुतित्रयम् ।
श्रुतिद्वयं परित्यज्य कर्तव्यो धैवतस्ततः ॥ ५६ ॥
एकां श्रुतिं परित्यज्य निषादस्तदनन्तरम् ।
षड्जग्रामसमुद्भूत उक्तोऽसौ श्रुतिमण्डलः ॥ ५७ ॥

तद्यथा षड्जग्रामे श्रुतिमण्डलम् —

ग
रि　　　　　　म
　　　　　　　　प
　　　　　　　　ध
स　　　　　　नि

१. 'त्र' ख. पाठः.

इदानीं सम्प्रवक्ष्यामि मध्यमश्रुतिमण्डलम् ।
(क्रे ? ज्ञे)यस्तिस्रो ह्यतिक्रम्य मध्य(मा ? मो)ऽयं चतुःश्रुतिः ॥
श्रुतिद्वयमतिक्रम्य तृतीयः पञ्चमो भवेत् ।
ततस्तिस्रो ह्यतिक्रम्य चतुर्थो धैवतो भवेत् ॥ ५९ ॥
ज्ञेय(ःस्व ? स्त्वे )कामतिक्रम्य निषादस्तु द्वितीयकः ।
श्रुतित्रयमतिक्रम्य ततः षड्जश्चतुर्थकः ॥ ६० ॥
ऋषभस्तु द्वयं त्यक्त्वा तृतीयः परतो भवेत् ।
श्रुतिमेकामतिक्रम्य गान्धारः स्याद् द्वितीयकः ॥ ६१ ॥

मध्यमग्रामे श्रुतिमण्डलम् —

ध नि

स

प

रि

म ग

भरतस्तु पुनर्ऋषभादिश्रुतिमण्डलं दर्शयति । किमत्र कारणम् । उच्यते । ग्रामद्वयेऽप्यन्तर्मूर्छनाप्रतिपादनार्थम् । यद्वा ग्रामद्वयेऽपि षड्जमध्यपरौ ग्रामण्यौ भवतः । अन्यस्वरा(स्ते ? स्त)दग्रेसरा इति ।

इति तावन्मया प्रोक्ताः श्रुतयो ग्रामसंश्रिताः ।

इति श्रुतिप्रकरणम् ।

इदानीं सम्प्रवक्ष्यामि स्वराणां च विनिश्चयम् ॥ ६२ ॥

तत्रादौ स्वरशब्दस्य व्युत्पत्तिरिह कथ्यते ।
'राजृ दीप्तावि'ति धातोः स्वशब्दपूर्वकस्य च ॥६३॥
स्वयं यो राजते यस्मात् तस्मादेष स्वरः स्मृतः ।

(तद ? न)नु स्वर इति किम् । उच्यते । रागजन-(रो ? को)ध्वनिः स्वर इति । तथाचाह कोहलः —

"आत्मेच्छया महितलाद् वायुरुद्यन्निधार्यते ।
नाडीभित्तौ तथाकाशे ध्वनिरक्तः स्वरः स्मृतः ॥"

ननु स्वर एव स्या(न्ने ? दे)कोऽनेको वा व्यापको-ऽव्यापको वा नित्योऽनित्यो वा (स्यात् ?) । अत्रोच्यते — एकोऽनेको व्यापको नित्यश्चेति । तत्र निष्कलरूपेणैकः स्वरः षड्जादिरूपेणानेकः स्वरः । तथाचाह कोहलः —

"जातिभाषादिसंयोगादनन्तः कीर्तितः स्वरः ।
नादैर्युक्तस्तालमिति (क ? क्र)तौ योज्यो रसेष्वपि ॥"

इति । नित्योऽविनाशी । व्यापकः सर्वगतः । तथाचाह कोहलः —

"ऊर्ध्वनाडीप्रयत्नेन सर्वभित्तिनिघट्टनात् ।
मूर्छितो ध्वनिरा मूर्ध्नः स्वरोऽसौ व्यापकः परः ॥"

ननु षड्जादीनां कथं स्वरत्वं व्यञ्जनत्वात् । यदि व्यञ्जनानां स्वरत्वमभिधीयते, तदानीं कादीनामेवास्तु स्वरत्वम् । अत्रोच्यते । असाधारणत्वात् षड्जादीनामेव स्वरत्वं न कादीनामिति । ननु षड्जादीनामसाधारणत्वं कथम् । आप्तोपदेशात् षड्जादीनामसाधारणत्वम् । तथाचाह कोहलः, महेश्वरः —

"षड्जं *वदति मयूर ऋषभं चातको वदेत् ।
अजा वदन्ति गान्धारं क्रौञ्चो वदति मध्यमम् ॥
पुष्पसाधारणे काले कोकिलः पञ्चमं वदेत् ।
प्रावृट्काले तु सम्प्राप्ते धैवतं दर्दुरो वदेत् ॥
सर्व(ता ? दा) च तथा देवि ! निषादं वदते गजः ।"

यद्वा (दृ ? ऊ)र्ध्वध्वनिगामित्वेन षड्जादीनामेव साधारणत्वम् इति अथवा षड्जादयः स्वरा न भवन्ति, आकारादय एव स्वराः । षड्जादयस्तु तेषामाकारादीनामुच्चारणार्थम् इति । ननु चतुर्दशानां स्वराणां मध्ये आकारादीनां कथं ग्रहणम् । सत्यमुक्तम् । एतेषामसाधारणत्वेन ग्रहणं कृतम् । असाधारणत्वं चैतेषामूर्ध्वध्वनिगामित्वेन । यद्वा षड्जादीनां व्यञ्जनानां स्वरत्वमुक्तम् । न(नु ? तु) सङ्केतमात्रमेतदुक्तं भवति । आचार्याणां परिभाषेत्यर्थः ।

इदानीमवसरप्राप्तं चा(युनु ?)तुर्विध्यं स्वराणां द॑र्शयामि । तद्यथा — वदनाद् वादी स्वामिवत् । संवदनात् संवादी अमात्यवत् । अनुवदनादनुवादी परिजनवत् । विवदनाद् विवादी शत्रुवत् । ननु वदनादिकं प्राणिधर्मः कथमचेतनानां स्वराणां सम्भवति । सत्यमुक्तम् । वदनं हि नामात्र प्रतिपादकत्वं विवक्षितं, न वचनमिति । किं तत् प्रतिपादयति । रागस्य रागत्वं जनयति । त्रि(ते ? के)च वादिनः स्वराः सप्तैव । स च वाद्यंशवत् (दा ? दश)विधो बोद्धव्यः ।

१. 'सन्दर्श' ख. पाठः.

* इह सर्वत्र वदतिस्थाने नदतिपाठो दृश्यते समानतन्त्रे ।

वादिमण्डलं यथा — सरिगमपधनी। [1]संवादिनस्तु पुनः समश्रुतिकत्वे सति त्रयोदश नवान्तरत्वेनावबोद्धव्याः। किं तत् संवादि(नी?)त्वं नाम। यद् वादिस्वरेण रागस्य रागत्वं जनितं तन्निर्वाहकत्वं नाम संवादित्वम्। संवादिमण्डलं (मण्डलं?) यथा —

ग नि
ध रि प
स म

[2]
नि

प ध

नि ग [3]नि ग ध [4]रि

स ध रि म ध रि | नि ग स मा प सा | ध रि नि ग

इति संवादिमण्डलम्। संवादिप्रयोगो यथा — यस्मिन् गीते योऽशत्वेन परिकल्पितः षड्जस्तस्य स्थाने मध्यमः क्रियमाणो रागहा न भवेत्। यस्मिन् स्थाने मूर्छनावशान्मध्यमः प्रयुक्तः अस्मिन् स्थाने क्रियमाणः षड्जो जातिरागहा न भवेत। षड्जपञ्चमयोः स्थाने पञ्चमषड्जौ प्रयुज्यमानौ जातिरागहानिकरौ न भवतः। एवम् ऋषभधैवतयोः स्थाने धैवतर्षभौ प्रयुज्यमानौ जातिरागविनाशकरौ न भवतः। एवं गान्धारनिषादयोः स्थाने निषादगान्धारौ। (कक? ऋष)भस्य धैवतांशत्वेन (रेवगुप्त? धैवत)स्य ऋषभांशत्वेन तदुभयरागजनन्याश्चर्षभ[5]जातेर्ऋषभांशपरिग्रहात् परस्परसम्बद्धौ च प्रयुज्यमानौ जातिरागविनाशकरौ न भवतः। अनुवादित्वं च पुन-

१. 'सः', २. '३', ३. 'नी', ४. 'री' ख. पाठः
५. 'भी' क. पाठः

रेकश्रुत्यन्तरहीनत्वेन स्यात्। ननु कि(न्त्वन? न्तद)नुवादित्वम्। यत संवादिना रागस्य रागत्वं संपादितं तत्प्रतिपा-(दि? दकं) नामानुवादित्वम्। यथा —

प रि

ग ध

नि

अनुवादिप्रयोगो यथा — षड्जस्थाने ऋषभः ऋषभस्थाने षड्जः प्रयुज्यमानः स्वरूपं भजन् जातिरागहा न भवति। पञ्चमस्य[2] स्थाने धैवतः प्रयुज्यमानो धैवतस्य स्थाने पञ्चमः प्रयुज्यमानो रागहा न भवेत्। षड्जस्थाने धैवतः प्रयुज्यमानो धैवतस्थाने[3] षड्जः प्रयुज्यमानो जातिरागविनाशकरो न भवति। पञ्चमस्थाने ऋषभः प्रयुज्यमानः ऋषभस्थाने पञ्चमः प्रयुज्यमानो जातिरागहा न भवेत्। इदानीं गान्धारनिषादयोरेकश्रुत्यन्तरहीनत्वेनानुवादित्वे प्राप्ते द्यन्तरत्वाद् विवादित्वमुक्तम्। किं तद् विवादित्वं नाम। वाद्यादिभिः स्वरैर्यद् रागस्य वादित्वं संवादित्वमनुवादित्वं प्राप्तं, तद्विनाशकत्वं नाम विवादित्वम्। विवादिमण्डलं यथा —

१. 'श्रुतिही' क. पाठः. २. 'मस्था', ३. 'तस्य स्था' ख. पाठः.

ग म
०
ग ग
०
नि नि
ध ध

विवादिप्रयोगो यथा — ऋषभस्थाने गान्धारः प्रयुज्यमानो गान्धारस्थाने पञ्चम ऋषभः प्रयुज्यमानो जातिरागहानिकरो भवेत्। धैवतस्थाने निषादः प्रयुज्यमानो (जा)तिरागहानिकरो भवेत् । इति षड्जग्रामे ।

इदानीं मध्यमग्रामे वादित्वं संवादित्वमनुवादित्वं च प्रदर्श्यते । तत्र वादिनो मध्यमादिस्वराः ! सप्तनवकत्रयोदशान्ताः संवादिनः । एकश्रुत्यन्तरहीनादनुवादिनः । द्यन्तरौ तु स्वरौ विवादिनौ । मध्यमग्रामे वादिमण्डलं — म प ध नि स रि ग । संवादिमण्डलं यथा —

स
स
सृ
नि प
न्म त णि
इ नि नि

मध्यमग्रामे अनुवादिमण्डलं यथा —

नि स
प
रि प
रि म स ग रि

मध्यमग्रामे विवादिमण्डलं यथा —

नि
ध
म ग रि

इदानीं सप्तविधस्वरयोगस्य नामानि कथ्यन्ते । आर्चिकं, गाडिकं, सामिकं, स्वरान्तरम् , औडवं, षाडवं, सम्पूर्णं चेति । तथाचाह नारदः —

"आर्चिको गा[१]डिकश्चैव सामिकश्च स्वरान्तरः ।
औडवं षाडवश्चैव सम्पूर्णश्चेति सप्तमः ॥
एकस्वरप्रयोगो (भि ? हि) आर्चिकः सोऽभिधीयते ।
गा[२]डिको द्विस्वरो ज्ञेयस्त्रिस्वरश्चैव सामिकः ॥
चतुःस्वरप्रयोगो हि कथितस्तु स्वरान्तरः ॥"

१., २. 'धि' ख. पाठः.

औडवः *पञ्चमेन धृतो यस्मात् तेनासौ धैवतो मतः। ललाटे धैवत इत्यर्थः (?)।

निषीदन्ति स्वराः सर्वे निषादस्तेन कथ्यते ॥ ६४ ॥
चतुःश्रुतिस्वरा विप्रास्त्रिश्रुती क्षत्रियौ मतौ ।
वैश्यौ द्विश्रुतिकौ ज्ञेयौ शूद्रौ चान्तरकौ स्वरौ ॥ ६५ ॥
वर्गाष्टकं तु सम्प्राप्य अकारादियशान्तकम् ।
वर्णमात्रसमायुक्तमुद्धरेत् स्वरसप्तकम् ॥ ६६ ॥
अष्टमस्य तृतीयं तु हरिबीजसमन्वितम् ।
आद्यं स्वरं स्वरज्ञस्तु उद्धरेत तु प्रयत्नतः ॥ ६७ ॥
सप्तमस्य द्वितीयं तु कामबीजसमन्वितम् ।
द्वितीयं तु स्वरं विद्धि ब्रह्मस्थानसमुद्भवम् ॥ ६८ ॥
द्वितीयस्यापि वर्गस्य तृतीयं विष्णुसंयुतम् ।
उद्धरेच्च स्वरं नित्यं स्वरभेदमनोहरम् ॥ ६९ ॥
षष्ठस्यापि हि वर्गस्य अन्ति(मश्चा ? मं चा)दिसंयुतम् ।
अविनष्टं विजानीयान्मध्यमं स्वरस(प्त ? त्त)मम् ॥ ७० ॥
तथादिप्रथमोपेतं स्व( र ? रं ) संविद्धि शोभनम् ।
व्योमसङ्ख्यासमायुक्तमोष्ठस्थानसमुद्भवम् ॥ ७१ ॥
पञ्चमस्यापि वर्गस्य चतुर्थं चा( ति ? दि)संयुतम् ।
कोदण्डद्वयसम्भूतमुद्धरेत् स्वरमुत्तमम् ॥ ७२ ॥
अकारान्तान्तसम्भिन्नं पञ्चमान्तं समुद्धरेत् ।
ब्रह्मस्थानसमुद्भूतं सुतारध्वानिसंयुतम् ॥ ७३ ॥

* इतः परम् औडवादिनिरूपणपरः कियांश्चिद् ग्रन्थपातः सम्भाव्यते ।

आगमस्थं स्वरोद्धारमि(?)ति तावत् प्रदर्शितम् ।
अधुना सम्प्रवक्ष्यामि कुलवर्णादिनिर्णयम् ॥ ७४ ॥

देवकुलसमुत्पन्नाः षड्जगान्धारमध्यमाः ।
पितृवंशसमुत्पन्नः स्वरोऽसौ पञ्चमः किल ॥ ७५ ॥

ऋषिवंशसमुत्पन्नौ स्वरा(दि?वृ)षभधैवतौ ।
असुराणां कुले जातो नि(षसा?षा)दः स(नि)संज्ञितः ॥

शूद्रजातिसमुत्पन्नौ तत् काकलस्यान्तरौ[1] स्वरौ(?) ।
पद्मपत्रप्रभः षड्ज ऋषभः शुकवर्णकः ॥ ७७ ॥

कनकाभस्तु गान्धारो मध्यमः कुन्दसन्निभः ।
पञ्चमस्तु भवेत् कृष्णः पीतवर्णस्तु धैवतः ॥ ७८ ॥

निषादः सर्ववर्णोऽयं विज्ञेयैः[2] स्वरवर्णकः ।
षड्जस्य दैवतं ब्रह्मा ऋषभो वह्निदैवतः ॥ ७९ ॥

गान्धारो भारतीदेवो मध्यमो (भि?हर)दैवतः ।
पञ्चमः शतयज्ञस्तु धैवतो गणनायकः ॥ ८० ॥

निषादो भानुदेवस्तु इत्येते स्वरदेवताः ।
अग्निगीतः स्वरः षड्ज ऋषभो ब्रह्मणोदितः ॥ ८१ ॥

सोमेन गीतो गान्धारो विष्णुना मध्यमः स्वरः ।
पञ्चमस्तु स्वरो गीतो नारदेन महात्मना ॥ ८२ ॥

धैवतश्च निषादश्च गीतौ तुम्बुरुणा स्वरौ ।
हास्यशृङ्गारयोः का(र्ये?र्यौ) स्वरौ मध्यमपञ्चमौ ॥ ८३ ॥

---

१. 'र' ख. पाठः.　२. 'या' क. पाठः.

षड्जर्षभौ तथा ज्ञेयौ वीररौद्राद्भुतेषु च ।
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ॥ ८४ ॥
धैवतश्चापि कर्तव्यो बीभत्से सभयानके ।
कण्ठादुत्तिष्ठते षड्ज ऋषभः शिरसः स्थितः ॥ ८५ ॥
नासायाश्चैव गान्धार उरसो मध्यमः स्वरः ।
उरसः शिरसः कण्ठादुत्थितः पञ्चमः स्वरः ॥ ८६ ॥
तालुदेशात् समुत्पन्नो धैवतस्तु यशस्विनि ! ।
निषादस्तु समुत्पन्नो विज्ञेयः सर्वसन्धितः ॥ ८७ ॥
एवं स्वरान् विजानीयादुत्पन्नान् गीतसागरे ।
महादेवमुखोद्भूतान् देशीमार्गे च संस्थितान् ॥ ८८ ॥

अथ किमुच्यते ग्रामशब्देन । ननु कति ग्रामा भवन्ति ।

कस्मादुत्पद्यते ग्रामः किं वा तस्य प्रयोजनम् ।
अत्रोच्यते —
समूहवाचिनौ ग्रामौ स्वरश्रुत्यादिसंयुतौ ॥ ८९ ॥
यथा कुटुम्बिनः सर्वे एकीभूत्वा वसन्ति हि ।
सर्वलोकेषु स ग्रामो यत्र नित्यं व्यवस्थितः ॥ ९० ॥
षड्जमध्यमसंज्ञौ तु द्वौ ग्रामौ विश्रुतौ किल ।
गान्धारं नारदो ब्रूते स तु मर्त्यैर्न गीयते ॥ ९१ ॥
सामवेदात् स्वरा जाताः स्वरेभ्यो ग्रामसम्भवः ।
द्वावेतौ च इमौ ज्ञेयौ षड्जमध्यमलक्षितौ ॥ ९२ ॥

---

१. 'शे स' ख. पाठः.

प्रयोजनं च यथा —स्वरश्रुतिमूर्छनातानजातिरागाणां व्यवस्थापनत्वं नाम प्रयोजनम् । ननु कथं षड्जमध्यमस्वराभ्यां ग्रामव्यपदेशः । उच्यते । असाधारणत्वेन ताभ्यां ग्रामव्यपदेशः । असाधारणत्वं च देवकुलसमुत्पन्नत्वेन । तथाचाह नारदः —

"देवकुलसमुत्पन्नाः षड्जगान्धारमध्यमाः ।
एतेषां देवता ज्ञेया ब्रह्मविष्णुमहेश्वराः ॥

उभयोर्ग्रामयोर्मध्ये मुख्यत्वं कस्य गम्यते ।
षड्जवाहि च मुख्यत्वं गम्यते वचनान्मुनेः ॥"

एतदुक्तं भवति —

द्वौ ग्रामौ विश्रुतौ लोके षड्जमध्यमसंज्ञितौ ।

ननु कथं द्वावेव ग्रामौ । उच्यते । इह हि द्विस्वरप्रयोगमूलप्रयोगवशाद् द्वौ ग्रामावुपन्यस्तौ ।

जातिभिः श्रुतिभिश्चैव स्वरा ग्रामत्वमागताः ॥ ९३ ॥

तत्र जातिभिः शुद्धाभिः श्रुतिभिश्च नातिकाभिः(?) । तस्मात् शुद्धासु जातिषु विकृतासु च ये स्वराः सन्ति तेषां स्वराणां श्रुतिवैकल्यात् किं स्यादुत्कर्षापकर्षाभ्यां संकीर्णत्वेन च स्वरा ग्रामत्वमागताः । तत्र शुद्धाभिः षड्भिः षड्जो विकृताभिर्मध्यम इति द्वाभ्यां च संकीर्णा जाताः । ताभ्यो रागसंभवेति(?) ग्रामान्यत्वाज्जातिरागान्यत्वम् ।

इदानीमिव स्वराः प्राप्ता *(?) मूर्छनाः कथ्यन्ते । ननु मूर्छनाशब्दस्य व्युत्पत्ति कीदृशी । लक्षणं च कीदृशं

तस्य । उच्यते । मुर्छना—(ना?)व्युत्पत्तिः—'मूर्छा मोह-समुच्छ्राययोः',

मूर्छते (?) येन रागो हि मूर्छनेत्यभिसंज्ञिता ।
आरोहणावरोहणक्रमेण स्वरसप्तकम् ॥ ९४ ॥

मूर्छनाशब्दवाच्यं हि विज्ञेयं तद्विचक्षणैः ।

सा च मूर्छना द्विविधा सप्तस्वरमूर्छना द्वादशस्वर-मूर्छना चेति । तत्र सप्तस्वरमूर्छना चतुर्विधा पूर्णा षाड्बा औडुबिता साधारणा चेति । तत्र सप्तभिः स्वैर्या गीयते सा पूर्णा । षड्भिः स्वैर्या गीयते सा षाडवा[1] । पञ्चभिः स्वैर्या गीयते सा औडुबिता । काकल्यैरन्तरस्वैर्या[2] गीयते सा साधारणा ।

इदानीं मूर्छनामण्डलमुच्यते । तत्र परिपाट्याहित-त्वेन प्रवृ(त्तास्ता? त्तत्वा)त् सप्तस्वराणां मूर्छनानां प्रतिग्राम-मेकोनपञ्चाशत् स्वराः कोष्ठाश्च भवन्ति । तद्यथा—

एकोना खण्डु(?) पञ्चाशत् कर्तव्याः स्वरसंयुताः ॥ ९५ ॥
तिर्यगूर्ध्वं च रेखाभिरष्टभिश्चैव कोष्ठकाः ।

तत्र स नि धे प म ग रीत्याद्याः सप्त षड्जग्रामे । मगरिसनिधपाद्याः सप्त मध्यमग्रामे । (ति?) तिर्यगूर्ध्वगा अपि स्वरास्तिर्यक् कार्याः । तद्यथा—निधपमगरिसा इति षड्ज-

१. 'वा', २. 'म्बि' ख. पाठः.

* 'इदानीमवसरप्राप्ता' इति पाठः स्यात् ।

ग्रामे । गरिसनिधपमा उर्ध्वा मध्यमग्रामे[1] । एवं तावदुभयग्रामिक्यश्चतुर्दश मूर्छनाः सम्पूर्णाः—सरिगमपधनि । निसरिगमपध । धनिसरिगमप । पधनिसरिगम । मपधनिसरिग । गमपधनिसरि । रिगमपधनिस इति षड्जग्रामे । मपधनिसरिग । गमपधनिसरि । रिगमपधनिस । सरिगमपधनि । निससरिगमपध । धनिसरिगमप । पधनिसारिगम । इति मध्यमग्रामे । मूर्छनामण्डलम् —

| | | | | | | |
|---|---|---|---|---|---|---|
| नि | ध | प | म | ग | रि | म |
| ध | प | म | ग | रि | स | नि |
| प | म | ग | रि | स | नि | ध |
| म | ग | रि | स | नि | ध | प |
| ग | रि | म | नि | ध | प | म |
| रि | स | नि | ध | प | म | ग |
| स | नि | ध | प | म | ग | रि |

इति षड्जग्रामे मूर्छनामण्डलम् ।

| | | | | | | |
|---|---|---|---|---|---|---|
| ग | रि | स | नि | ध | प | म |
| रि | स | नि | ध | प | म | ग |
| स | नि | ध | प | म | ग | रि |
| नि | ध | प | म | ग | रि | स |
| ध | प | म | ग | रि | स | नि |
| प | म | ग | रि | स | नि | ध |
| म | ग | रि | स | नि | ध | प |

इति मध्यमग्रामे मूर्छनामण्डलम् ।

एवं तावदुभयग्रामिक्यश्चतुर्दशमूर्छनाः सम्पूर्णाः कथिताः । इदानीं तासां नामानि कथ्यन्ते—

१. 'मे । तिर्यगूर्ध्वगा अपि स्वराः । ए' क. पाठः.

षड्जे चोत्तरमदा स्यान्निषादे रजनी स्मृता ॥ ९६ ॥
धैवते चोत्तरा ज्ञेया शुद्धषड्जा च पञ्चमे ।
मध्यमे मत्सरी ज्ञेया गान्धारे चाश्वक्रान्तिका ॥ ९७ ॥
ऋषभेण च विज्ञेयाः सप्तमी च भिरुद्गता च (?) ।
षड्जग्रामाश्रिता तोयं (?) विज्ञेयाः सप्त मूर्छनाः ॥ ९८ ॥
अतःपरं प्रवक्ष्यामि मध्यमग्राममूर्छनाः ।
मध्यमेन च सौवीरी गान्धारे हरिणाह्वया ॥ ९९ ॥
मूर्छना शुद्धमध्य * (?)षड्जे स्यान्निषादे चैव मार्जिका।
पौरवी धैव(तो ? ते) ज्ञे(यो ? या) हृष्यका पञ्चमे तथा ॥
इति तावन्मया प्रोक्ता मध्यमग्राममूर्छनाः ।
स्यात् कलोपनता चैव ऋषभेणैव + + + ॥ १०१ ॥
षट्स्वरैः षाडवा ज्ञेया औडुवा पञ्चभिः स्वरैः ।
षाडवौष्ठी च ता(नां ? सां) च (?) व्युत्पत्तिश्च निगद्यते॥
षट्स्वरा अवन्ति रक्षन्ति ये ते (?) ।
इदानीं सम्प्रवक्ष्यामि षाडवौडवमूर्छनाः ।

उडवो नक्षत्राणि गच्छन्ति यस्मिन्नाकाशे तदाकाशमौडवम् । तेन पञ्चसंख्या लक्ष्यते ।

पञ्चमं हि महाभूतं तत्स्था संख्या च विद्यते ॥ १०३ ॥

यस्य तदौडुवितं षाडवस्वराः तेषां प्रयोगः षाडवः। तारकादितच् प्रत्ययः ।

षाडवं षट्स्वरं ज्ञेयं लक्षणं सप्तधा मतम् ।
(इत्ये?ए)कोनपञ्चाशत्सं(ख्या?ख्यं) तज्ज्ञेयं गीतवेदिभिः॥

* इह पूर्वप्रदर्शितमध्यमग्राममूर्छनामण्डलानुसारेण गान्धारनामनिर्देशानन्तरम् ऋषभनामादर्शनाद् आदर्शे तद्वाचकस्य ग्रन्थस्य लोपः सम्भाव्यते।

पञ्चस्वरमौडुवितं पञ्चधा लक्षणं स्मृतम् ।
पञ्चत्रिंशच्च संख्यं हि आचार्यैर्यदुदाहृतम् ॥ १०५ ॥

षड्जऋषभौ पञ्चमनिषादैः षड्जग्रामिकाः षाडवाः। षड्जऋषभगान्धारैर्हीना मध्यमग्रामे षाडवाः 'संवादिलोपादौडुवितत्वमि'ति वचनात् संवादिस्वराभ्यामौडुवितत्वं प्राप्तमिति प्रायिकं। कदाचिदनुवादिस्वराभ्यामौडुवितत्वं प्राप्तमिति प्रायिकं। (कदाचिदनुवादिस्वराभ्यामौडुवितत्वं प्राप्तमिति प्रायिकं?) कदाचिदनुवादिस्वराभ्यामौडुवितत्वं भवत्येव। यथा पञ्चमऋषभयोः षड्जग्रामे मध्यमग्रामे धैवतऋषभयोरिति[1] पञ्चमषड्जविहीनो द्विश्रुतिकाभ्यां तथा विहीनाश्च पञ्चमऋषभैर्विहीनं चौडुवितौ भवति। षड्जग्रामे धैवतऋषभविहीनो द्विश्रुतिकाभ्यां विहीने ता ज्ञेया पञ्चमस्वरकर्ता स्थाना (?) भवन्ति खलु मध्यमग्रामे। इदानीमे(व?त)द्देव प्रस्तारेण दर्शयति। तद्यथा — षड्जहीनाः षाडवाः निधैपमगरि[3]। धैपमगरिनि। पमगरिनिध। मगरिनिधप। गरिनिधपम। रिनिधपमग। निधैपमगरि। ऋषभहीनाः — निधपमगस। धपमगसनि। पमगसनिध। मगसनिधप। गसनिधपम। सनिधपमग। निधपमगस। सगमपधनि। निरिगमध। धनिरिगम। मधनिरिग। गमधनिरि। रिगमधनि। (स्वर? सप)-हीनाः। सरिमपध। धसरिमप। पधसरिम। मपधसरि। रिमपधस। निगहीनाः। सगमधनि। निसगमध। धनिसगम। मधनिसग। गमधनिस। परिहीना योगाः। मध्यमग्रामे

१. 'पि' क. पाठः. २. 'भयोः षड्जग्रामे', ३., ४., ५. 'भा' ख. पाठः.

वत्वात् (?)। मपधनिरिग। गमपधनिरि। रिगमपधनि। निरिग-
मपध। धनिरिगमप। (पधनिरिगम) षड्जहीनाः। मपधनिसग।
गमपधनिस। सगमपधनि। निसगमपध। धनिसगमप। पध-
निसगम। रिहीनाः। मपधनिसरि[1]। रिमपधनिस[2]। सरिमपधनि।
निसरिमपध। धनिसरिमप[3]। पधनिसरिम। गहीनाः। मप-
नि(ध?स)ग। गमपनिस। सगमपनि। निसगमप। पनिसगम।
धारिहीनाः। मपधसरि। रिमपधस। सरिमपध। धसरिमप।
पधसरिम। निगहीनाः। इत्यौडुविताः।

ननु मूर्छनातानयोः को भेदः। उच्यते। मूर्छनातान-
योनुनत्वान्तरत्वमिति विश्राङ्खिलैं[4] (?) एतच्चासङ्गतम्। संग्र-
हश्लोके तु मूर्छनात(ान)योर्भेद(स्य) प्रतिपादितत्वात्। तत्
कथम्। मूर्छनारोहक्रमेण तानोऽवरोहक्रमेण भवतीति भेदः।

अधुना तानानां यज्ञनामानि कथ्यन्ते —

अग्निष्टोमोऽत्यग्निष्टोमो वाजपेयोऽथ षोडशी।
पुण्डरीकोऽश्वमेधश्च राजसूयश्च सप्तमः॥ १०६॥

इति षड्जहीनषाडवताननामानि। स्वरसृष्टिः (?)।

तृड्बहुः + सुवर्णश्च गोसवश्च महाव्रतः।
विश्वजिद् बहुयज्ञश्च प्राजापत्यस्तथैव च॥ १०७॥

इति ऋषभहीनषाडवताननामानि।

अश्वक्रान्तो रथाक्रान्तो विष्णुक्रान्तस्तथैव च।
सूर्यक्रान्तो गजक्रान्तो वलतीनामवज्रकौ॥ १०८॥

इति पञ्चमहीनषाडवता(न)नामानि।

---

१ 'री' क. पाठः. २. 'नी' ख. पाठः. ३. 'नी' क. पाठः.
४. 'लयेत' ख. पाठः.

चातुर्मासिकसंज्ञश्च शस्त्रश्चैकोत्थकस्तथा ।
सौत्रामणिश्च पित्रा च उद्भिद्यागश्च सप्तमः ॥ १०९ ॥

इति निषादहीनषाडवताननामानि । इति षड्जग्रामे षाडवताननामानि अष्टाविंशतिः ।

सावित्री चाद्यसावित्री सर्वतोभद्र एव च ।
सर्पो यजनसंज्ञश्च तथा वैकुण्ठवायनः ॥ ११० ॥

इति मध्यमग्रामे षड्जहीनताननामानि ।

अग्निचिद् द्वादशाहश्च उपांशुः सोम एव च ।
अश्वप्रतिग्राहोद्वहीस्तथाभ्युदय इत्यपि(?) ॥ १११ ॥

इति ऋषभहीन(तान)नामानि ।

सर्वस्वदक्षिणो दीक्षा सोमः समिधसंज्ञकः ।
स्वाहाकारश्च नूनश्च तथा गोदोहनस्तथा ॥ ११२ ॥

इति गान्धारहीनताननामानि । इति मध्यमग्रामे एकविंशतिः षाडव(तान)नामानि । इत्येवमुभयग्रामाश्रिता(ह्ये?न्ये)कोनपञ्चाशत्ताननामानि ।

इडख्यः पुरुषमेधश्च श्येनो यज्ञ इषुस्तथा ।
अङ्गिराः कंससंज्ञश्च षड्जग्रामेऽपि चौडवाः ॥ ११३ ॥

(इति) षड्जपञ्चमहीनताननामानि ।

अग्निष्टोमोऽथ दर्शश्च नादी वै पूर्णमासिकः ।
अश्वप्रतिग्रहो रात्रिस्तथा कौभरतो मतः ॥ ११४ ॥

इति गान्धारनिषादहीनताननामानि ।

सौभाग्यकश्च शारीरी शारिकृत् पुष्टिकृत् तथा ।
वैनतेयो भवेदेव उच्चाटनवशीकृतौ ॥ ११५ ॥

इति पञ्च(म) ऋषभहीनताननामानि। इति षड्जग्रामे औडुविताननामानि एकविंशतिः।

त्रैलोक्यमोहनो धीरः कन्दर्पबलशासनः।

शङ्खपूगो गजच्छायो रौद्रोऽसौ विष्णुविक्रमः॥ ११६॥

(इति) मध्यमग्रामे धैवतऋषभहीनौडुविताननामानि।

भैरवः क्रामदश्चैव आकुंष्टोऽब्जश्च पालकः।

सृष्टिकृद् वर्षकान्तारः सप्तमो रक्षितः स्मृतः॥ ११७॥

इति मध्यमग्रामे औडुविताननामानि चतुर्दश। उभयग्रामिक्यौडुविताः पञ्चत्रिंशद् भवन्ति। षाडवा औडुविताश्च मिलित्वा चोभयग्रामिकास्तानचतुरशीतिर्भवन्ति।

इदानीं साधारणकृता मूर्छनास्तु ख्यातुमाह — साधारणस्वरौ निषदगान्धारवन्तौ। तदादिकृता तत्रैवान्तर्भूता साधारणमूर्छना भवति। कुतः। स्वरात्मकत्वान्मूर्छनानां तानासाधारणतापि साधारणेनैव गतार्था।

इत्येवं च मया प्रोक्ता मूर्छनास्तु चतुर्विधाः।

कथमेषां तानानां प्रयोगः कार्य इति। उच्यते। द्विविधस्तानप्रयोगः प्रवेशेन निग्रहेण च। प्रवेशो ऋषभापेक्षया षड्जस्याधरीभूतस्य लोपनीयस्य विप्रकर्षपीडनम्। ऋषभापावदानम् इति यावत्। इति विप्रकर्षेण प्रवेशेन। मार्दवेन यथा — तस्यैव षड्जस्य निषादापेक्षया उत्तरीभूतस्य मार्दवं शिथिलीकरणं निषादपादानं (?) प्रवेश इति द्विविधं प्रवेशनम्। निग्रहस्त्वनन्तरः स्वपरित्यागास्पदं दर्शनम्। प्रयोगस्तु यथा—सासागरिपापापामारि। तथाचाह भरतः—

१. 'कु' क. पाठः. २. 'म' ख. पाठः.

"द्विविधा तानक्रिया तन्त्र्याः प्रवेशनं निग्रहस्तथा ।"
तत्र प्रवेशनम् अधरस्वरप्रकर्षादुत्तरस्वरमार्दवाद्वा । निग्रहश्चाह संस्पर्शः । कुतः, मध्यमसप्तकस्याविनाशित्वादित्यर्थः ।

ननु त्रिषु स्थानेषु स्वरप्रयोग इत्युक्तम् । कारीपिधाने तत्र कतमं स्वरसप्तकमवलम्ब्य मूर्छना कार्येति ये संशेरते तान् प्रत्याह—मध्यमसप्तकेन मूर्छनानिर्देशो ताव(?) मन्द्रतारसंसिद्ध्यर्थम् । दत्तिलेनाप्युक्तं—

"तानक्रिया द्विधा तन्त्र्यां प्रवेशान्निग्रहात् तथा ।
प्रवेशो ध्वनिसादृश्यमसंस्पर्शस्तु निग्रहः ॥"

भरतेनाप्युक्तम्—मध्यमस्वरेण मूर्छनानिर्देशो भवत्यविनाशित्वान्मध्यमस्य निग्रहे परिग्रहे वा । ननु षाडवौडुविते क्रियमाणे मूर्छनाप्रत्यभिज्ञानमस्ति वा नवा । अस्त्येव मूर्छनाप्रत्यभिज्ञानामिति । तथाचाह दत्तिलः—

"एवं कृतेऽपि तानत्वे गणयित्वा विनाशनम् ।
विद्यते तावतिथ्येषा मूर्छनेत्यवधारयेत् ॥"

इदं तु प्रयोक्तृश्रोतृसुखार्थमेव मूर्छनातानान्यत्वमुक्तम् । मानाप्रयोजनमपि त्रिस्थानप्राप्त्यर्थमित्युक्तम्[1] । ननु मध्यमसप्तकेन मूर्छनानिर्देशः क्रियते यदि तदा किमुक्तं मध्यमेन स्वरेणेति । सत्यमुक्तम् । स्वरजात्यपेक्षया एकवचनम् । कण्ठ्ये स्वरे मूर्छना कार्येति भावः । वैणग्रहणं च शारीरे अप्रकीर्तितः तस्यापि स्थानस्य लाभार्थम् । ननु प्रथमायां सप्तम्यां च मूर्छनायां षड्जलुप्ते रिगमपधनीति[2] एक-

१. 'न प्राप्त्यर्थमित्युक्तम् । ननु मध्यमसप्तकेन मू', २. 'री' ख. पाठः.

मेव रूपं भवति । तत्र न ज्ञायते विशेषः । सत्यं, भेदो नास्ति । वस्तुगणने पुनरस्त्येव भेदः । मन्द्रतारकृतो भेदः । ननु मूर्छनास्तावत् जातिरागेषूपयोगिन्य इति युक्तं तासां कथनम् । तानास्तु कुत्रोपयुज्यन्ते । उच्यते । द्वयोर्ग्रामयोर्जातिरागान्यत्वप्रतिपादनार्थं प्रयोगस्तानानाम् । यद्वा नष्टोद्दिष्टसंख्यासिद्ध्यर्थं(?) प्रयोगस्तानानाम् । कूटतानानां सहस्राणि पञ्चमत्रिंशदधिकानि (?) निष्पद्यन्ते । दत्तिलेनाप्युक्तं—

"पूर्णः पञ्चमसहस्राणि त्रयस्त्रिंशच्च संख्यया ।
कथयन्ति प्रतिग्राममुपयोगेण नैधुनाः ॥"

गणमात्रपरेण तानप्रयोगेण पूर्वस्तानप्रयोगो हन्यते । तथाचाह दत्तिलः —

"हन्यादनन्तरायेण पूर्वा यस्य क्रमोत्क्रमात् ।
गुणकारसमास्तत्र क्रमाच्छेषाः स्युरुत्तमाः ॥"

इदानीं गुणनोपायं कथयति— द्वाभ्यां पराभ्यामेकः पूर्वो ह(रे ? न्ये)त । द्वावेव भवतः । तौ च द्वौ त्रिभिर्हत्वा षड् भवन्ति । ते चतुर्हताश्चतुर्विंशतिर्भवन्ति । सा चतुर्विंशतिः पञ्चभिर्हता शतं विंशत्यधिकं भवति । विंशत्यधिकं शतं षड्भिर्हतं शतानि सप्त विंशत्यधिकानि भवन्ति । तानि सप्तभिर्हतानि पञ्चसहस्राणि चत्वारिंशदधिकानि भवन्ति । तत्र क्रमकृतांस्तान् संस्फोटयित्वा व्युत्क्रमकृतानि कूटतानानां सप्तसप्तस्वरप्रयोगात् पञ्चसहस्राणि त्रयस्त्रिंशदधिकानि भवन्ति । प्रस्तारो यथा—तत्र षड्जस्वरस्य स इत्येकः क्रमः । सा ऋषभस्य सरित्येक एव क्रमः । सरिसर इति च व्युत्क्रमे द्वितीयः रीसः गान्धारस्य सरिगेत्यतः क्रमः । सरिग

१. 'थात्र त' ख. पाठः.

गरि(के ? से)त्यादयो व्युत्क्रमाः पञ्च । गरिस रिगस गसरि सगरि इति व्युत्क्रमेण कूटतानाः पञ्चम (?) । तदेवं गान्धारस्य षट् तानाः । एवं मध्यमस्य सरिगमेत्येकं रक्रमः (?) । मगरिसेत्येव-मादयो विंशतिरुत्क्रमाः । तद्यथा—सरिगम मसरिग गमसरि गसरिम सगरिम सरिमग रिसमग रिगसम रिमसग समगरि मरिसग समगरि सरिगम इति मध्यमपूर्वाः षट् ताना व्युत्क्रमकृताः । एवं गान्धारऋषभषड्जानां प्रत्येकं षट् ताना भवन्ति । मिलित्वा चतुर्विंशतिर्भवन्ति । एवं पञ्चमस्य सरिगमपेत्येक एव क्रमः । पमगरिसेत्यादिव्युत्क्रमकृतानां शत-मेकोनविंशतिर्भवन्ति । तद्यथा—सरिगमप पमगरिस । पम-गरिसानां प्रत्येकं चतुर्विंशतिर्भवन्ति । मिलित्वा विंशत्यधिकं शतं भवति । एवं धैवतस्य सरिगमपधेत्येकः क्रमः । धपम-गरिसेति व्युत्क्रमः । धपमगरिसानां प्रत्येकं विंशत्यधिकं भवति । मिलित्वा सप्त शतानि विंशत्यधिकानि भवन्ति । एवं निषादस्यापि सरिगमपधनीत्येकः क्रमः । निधपमगरि सेति व्युत्क्रमः । निधपमगरिसानां प्रत्येकं सप्तशतानि विंश-त्यधिकानि भवन्ति । मिलित्वा पञ्चसहस्राणि चत्वारिंशच्च भवन्ति । तदेवमेतेषां स्वरान्तानविधाना षट्षष्टितन्त्र्यां शत-तन्त्र्यां चोपलभ्यते । तयोः स्वभावा (ऋ ? म)ध्यमादीनां कुट-तानभेदप्रदर्शनमिह न कृतमतिप्रसङ्गनिवृत्त्यर्थमेतेनैव क्रमेण बुद्धिमद्भिः स्वयमेव लक्षणीयमिति । तदेषां तानानां प्रयोजनं प्राप्त्यर्थमुक्तं स्थानानि त्रीण्युक्तानि कारुविन्धो[1]ख्यस्तानि

[1]. 'न्धौ' ख. पाठः.

तानि षट्षष्टिं विद्यामन्द्रादिसिद्धये। तस्मात् यत्किञ्चिद् गीयते तन्मध्यमध्वनिविशेषैः कण्ठध्वनिभिर्मन्द्रतारव्यवस्थासिद्धयर्थमेव। चतुर्विधा मया प्रोक्ता मूर्छनाः सप्तस्वरात्मिकाः।

इदानीं तु प्रवक्ष्यामि द्वादशस्वरमूर्छनाम्॥ ११८॥

तत्र मूर्छनानिर्देशः स्थानत्रितयप्राप्त्यर्थमिति वचनात् मन्द्रतारसिद्ध्यर्थमिति वचनाच्च द्वादशस्वरसम्पन्ना मूर्छना द्रष्टव्याः प्रयोगकाले। तथाचाह कोहलः—

"योजनीयो बुधैर्नित्यं क्रमो लक्ष्यानुसारतः।
संस्थाप्य मूर्छना जातिरागभाषादिसिद्धये॥"

नन्दिकेश्वरेणाप्युक्तं—

"द्वादशस्वरसम्पन्ना ज्ञातव्या मूर्छना बुधैः।
जातिभाषादिसिद्ध्यर्थं तारमन्द्रादिसिद्धये॥"

यद्याप्याचार्यैः सप्तस्वरमूर्छनाः प्रतिपादिताः स्थानत्रितयप्राप्त्यर्थं द्वादशस्वरैरेव मूर्छनाः प्रयुक्ता इति। अन्यथा चोक्षषाडवेरिता इति प्रयोगो न स्यात्। एवञ्च सति सरागसिद्धयान्त(?) स्यात्। षड्जजातौ रिगमधनिप्रयोगस्तारमन्द्रको न स्यात्। अन्येषामपि रागाणां नाशंकरः प्रयोगः स्यात्। तेन सरिगमधनि अन्या मूर्छना धनिगमपाद्यास्त्विय मूर्छना द्रष्टव्या (?)। तद्यथा—धनिसरिगमपधनि सरिग।
१ उत्तरमन्द्रा। निसरिगमपधनिसरिगम। २ रंजनी। सरिगमपधनि सरिगमप। उत्तारयत। रिगमपधनि सरिगमपध। शुद्धषड्जा। गमपधनि सरिगमपधनि। मत्सरीकृताः। मपधनि सरिगमपधनिसा। अश्वक्रान्ता। पधनि सरिगमपधनिसरि।

अभीरुद्गताः ॥ इति षड्जग्रामे । मध्यमग्रामेऽप्येवमेव पधनिसरिगाद्या मूर्छना निसरिगमपधनिर्धुगाद्या (?) रागकाले द्वादशस्वरमूर्छना अवगन्तव्याः । ताश्च षड्जग्रामे मूर्छनासु अन्तर्गता ज्ञेयाः । तद्यथा — निसरिगमपधनिसरिगम । सोमरी । सरिगमपधनि सरिगमप । हरिणाश्वाँ । रिगमपधनि सरिगमपध । काले वनता । गमपधनि सरिगमपधनि । तुसमध्या । मपधनि सरिगमपधनिसा । मार्गी । पधनिसरिगम पधनिसरि । पौरवी । धनि सरिगमपधनिसरिग । हृष्यका ।

अतःपरं प्रदर्श्यन्ते वर्णाश्चत्वार एव हि ॥ ११९ ॥
स्थायिसञ्चारिणौ चैव तथारोह्यवरोहिणौ ।

ननु वर्णशब्देन किमुच्यते । वर्णशब्देन गानमभिधीयते । यत्र समाः स्वरा अनुपहतरूपास्तिष्ठन्ति तेभ्यो यद् गीतं वर्णाभिव्यक्तिकृत् यत्र पदे स वर्णः स्थायीत्युच्यते । यथा षाड्जा सारीसा सारीसा । मध्यमायां तु मामामामा इति । यत्र गीते सञ्चरन्ति स्वराः परस्परमन्तसहिता एकैकशो वा स सञ्चारी वर्ण उच्यते । यथा मालवकैशीके सासासनि पनिपनिपनि साधरी पापनिनिनिनीत्येवमादिप्रकारेषु परस्परसञ्चाराद् आरोहन्तीत्यादि (?) यत्र गेयाः स्वरा आरोहन्ति एकैकशः सान्तरा वा स(वे?)वर्ण आरोहीत्युच्यते । यथा मालवपञ्चमे पापसधरी समगरि पमपम पधमामा पसारिसा सममा पारिगा साधनि पारिम्मधनीनीनी पारिम्मधनी पाधनि रिरिपा इति परस्परैकान्तरद्व्यन्तरस्वरारोहणादारोही ।

१. 'र्ये', २. 'श्या', ३. 'शु', ४. 'षड्जास', ५. 'स', ६. 'नी' ख. पाठः.

अवरोहन्ति स्वरा यत्रैकेनैव क्रमेण तु ॥ १२० ॥

स चावरोही शब्दे तु समनन्तर+स्वरः ।

पामामध्यमम गागगगमम रिरि रिप्रमा ममप्रपा पपप्रमामर्म्मिनिनि धधृ पपप म्रगगारिरिनिनाङ्कुपापा इति परस्परैकान्तरद्यन्तरस्वरावरोहादवरोहीति । अतएवोक्तं —

"शरीरस्वरसम्भूतास्त्रिस्थानगणशोभिताः ।
अमी वर्णास्तु विज्ञेया(द?अ)लङ्कारादिसिद्धये ॥"

ननु कथं वर्णनिष्पत्तिः । उच्यते । यदा हि स्वरा वर्णकर्षमाकर्षयन्ति गीतवशात् स्थायित्वेन सञ्चारित्वेन आरोहित्वेन अवरोहित्वेन (त)दा वर्णस्य निष्पत्तिः । यथा षाज्जा[2] स्थायीवर्णी (?)—सासासा । सञ्चारी यथा । धैवता । धधनीनीपधा । आरोही नन्दयन्त्यां गागागागा पापाधपमनरिरिरिरि पनिसधनिनिधा । अवरोही[3] तत्रैव समनन्तरस्वरैः पापापापापापा पापा धनीमापागागागागागा[4]दारप्पवं भवषति (?) यदर्थमुक्तं यथा एवमेते प्रवर्तन्ते प्रवर्तयन्तीत्यर्थः । शारीरस्वरे ।

वीणावर्णास्तु विज्ञेयाश्चत्वारो गीतयोजकाः ।

इदानीं सुप्रसिद्धास्त्रयस्त्रिंशदलङ्कारापादेना (?) ततः प्रयोगतश्च कथ्यन्ते । तत्रालङ्कारशब्देन किमुच्यते । अलङ्कारशब्देन मण्डलमुच्यते । यथा कटककेयूरादिनालङ्कारेण नारी पुरुषो वा मण्डितः शोभामावहेत्, तथा एतैरलङ्कारैः प्रसन्ना(द्या)दिभिरलङ्कृता वर्णाश्रया गीतिर्गातृश्रोतॄणां सुखावहा भवतीति । व्युत्पत्तिश्च यथा—'डुकृञ् करणे' धातु-

१. 'म्रि', २. 'षड्जां स्या' ख. पाठः. ३. 'हि' क. पाठः, ४. 'गागादा' ख. पाठः.

रलं(कृत?)शब्दपूर्वः अलङ्कृतमलङ्कारः घञन्तोऽयमलङ्कार-शब्द इति । तत्रालङ्काराणां नामानि कथ्यन्ते — प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्तः प्रसन्नमध्यमः समः बिन्दुः निवृत्तः प्रवृत्तः व्युत्पत्तिश्च तथा वर्णा (?) कम्पितः कुहरितः रेचितः[1] प्रेङ्खोलितः तारमन्द्रप्रमन्द्रतारः प्रसन्ननिसनः ह्रस्वारप्रसादः(?) उद्वाहितः उपलोलकः क्रमः निष्कूजितः (प्रा ? ह्ना)दमानः रञ्जितः आवर्तकः परिवर्तकः उद्घटितः आक्षिप्तकः सम्प्रदानः हसितः हुङ्कारः सन्धिप्रच्छादनः वि(धिन ? धुत)ः उद्गीतः गात्रवर्णश्चेति ।

इदानीमेतेषामलङ्काराणां लक्षणमुच्यते । तद्यथा— मन्द्रादारभ्य मेसारोहणं तारगतिं यावदसौ प्रसन्नादिः । मन्द्र-शब्देन प्रसन्नध्वनिरुच्यते । सारीगामापाधानीसा इति प्रसन्नादिः ।

तारादारभ्यावरोहक्रमेण प्रसन्नान्तः । यथा — सानी धपमगरीसा इति प्रसन्नान्तः ।

यत्राद्यन्तयोः प्रसन्नः मध्ये च तारः (स) प्रसन्नाद्यन्तः । यथा — सरिगमपधनि (सा) सानिधपमगरिसा इति प्रसन्नाद्यन्तः ।

ननु

यत्र मन्द्रो मध्ये आद्यन्तयोश्च तारः, स प्रसन्नमध्यः । यथा — सानीधापमागरीसा[2] सारीगमपधनीसा[3] इति प्रसन्न-मध्यः । (इति । ?)

१. 'लि' क. पाठः. २. 'सनीधपमगरिसा', ३. 'सरिगमपधनिसा' ख. पाठः.

स्थानत्रयेऽपि सदृशध्वनिः सप्तस्वरोच्चारणः समः। एतदुक्तं भवति — यस्य याव(न्तः ? त्यः) श्रुतयः स्वस्थानत्रितयेषु तावत् श्रुतिकमेव (?) कार्याः। यथा — सरिगमपधनिनी द्वयोर्द्वयोः स्वरयोः संवादिनोरुच्चारणात् समः। तद्यथा— सम सप रिधगनी। ग्रामभेदे तु रिपजयिति(?) विशेषः। इति समः। नि।

चिरमेकस्मिन् स्वरे षड्जादिरूपे स्थित्वा तदीयतारमग्निवत् (पृ ? स्पृ)ष्ट्वा कलामे(न्यः ?)कां[1] च स्थित्वा यत्र पुनरपि समा सा मन्द्रया गम्यते स बिन्दुः। सा सा इति बिन्दुः।

एककलान्तरं स्पृष्ट्वा बिन्दोरेव विपर्ययोच्चारणाप्रवृत्तौ विनिवृत्तत्वाद् निवृत्ताख्यः। यथा — सां सासा निवृत्तः प्रवृत्तः(?)।

आक्रीडितवदारोहादवरोहक्रमेण ष(ष्क ? ट्क)लो वेणुः। यथा — सरिगमपधनि निधपमगारिसा। वेणुः।

मन्द्रसप्तममध्ये पवनी(?)रोधेन द्विश्रुतेः कम्पनात् कम्पितस्त्रिकलः। यथा— सरिगमपधनिस कम्पितः।

मध्यमसप्तके त्रिश्रुतेः कम्पनात् त्रिकलः कुहरितः। यथा — सरिगमपधनिसा कुहरितः।

तारसप्तके त्रिश्रुतेः कम्पनात् त्रिकलो रेचितः। सरिगमपधनिस (र ? रे)चितः।

---

१. 'क्तां' ख. पाठः.

(तद् ?) द्वयोः स्वरयोर्बहूनां च स्वराणां समकलगमागमाच्चतुर्दशकलः प्रेङ्खोलितः। यथा—सरिरि सरिग गरिगम मपपमपधसपनि[1]निनिध नीससनि। प्रेङ्खोलितः।

अंशाच्चतुर्थं पञ्चमं वा स्वरं गत्वा यत्र मन्द्रे पुनरागम्यते तारमन्द्रप्रसन्नः। यथा—सरिगमप। सरिगमप। रिरिगमपधनिगमपधग। गमपधनिग। मपधनिम। मपधनिसम। अथवा मन्द्रस्वरात् तारं गत्वा पुनः सहसा मन्द्र-(व) शाद्वा गम्यते स तारः मन्द्रप्रसन्नः। सरिगमपधनि सासा तारः। मन्द्रप्रसन्ना मन्द्रात् सहसा तारः प्राप्य मन्द्रत्वेन क्रमेणावरोहा मन्द्रतारः प्रसन्नः(?)। सपः मगरि[2]सः रिध पमगरि गनि धपमग समनिधप। अथवा मन्द्रस्वराद्वा वर्तारः स्वरानुच्चार्य क्रमेणावरुह्य च मन्द्रेण वा गम्यते मन्द्रतारप्रसन्नः। यथा—सासा। निधपमगरिसौ[3]। मन्द्रतारप्रसन्नाः विरूपश्च प्रस्तारस्थायीत्यारोहणी च तत्र स्थायिन्येकस्वरः स्वस्य (?) क्रमशस्तारमन्द्रावरोहणेन मन्द्रतारारोहणेन स्वरेण प्रस्तारः। सरिरिस। सरिग। गरिस। सरिगमप। पमगरिस। सरिगमपध। धै[4]पमगरिस। सरिगमपधनि। निधपमगरिस। सरिगमपधनिस। सनिधपमगरिस। अथवा वेलषड्जग्रामे षड्जाद्याः सप्त मूर्छनाः मध्यमग्रामे मध्यमाश्च सप्त। एताश्चतुर्दश मूर्छनाः प्रत्येकं चतुर्धा भवन्ति। शुद्धा करकलिकलिता सान्तरा तद्वयोपेता चेति। एकैकस्या मूर्छना-

---

१. 'नीनीनीध', २. 'मारि', ३. 'स', ४. 'धा' ख. पाठः.

याश्चतुर्विधत्वात् षड्ज पञ्चचत्वारिंशद्युतानि पञ्चसहस्राणि कूटकूटतानाम् (?) ।

षट्पञ्चाशन्मूर्छनास्ताः पूर्णकूटास्तु योजिताः ॥ १२१ ॥
लक्षद्वयं (स्या?) सहस्राणि द्व्यशीतिर्द्वे शते तथा ।
चत्वारिंशच्च संख्याता अथापूर्णा(त् ? न्) प्रचक्ष्महे ॥
एकैकाद्यग्निविरहाद् गभजा षड्जादयः स्वराः ।
एकस्वरोऽत्र निर्भेदोऽप्युक्तो नष्टोदिसिद्धये (?) ॥ १२३ ॥
क्रमादकूटतानत्वे युक्तास्तेषूपयोगिनः ।

सप्तस्थानानि — आधारस्वाधिष्ठानानाहतमणिपूरक-(अनाहत?)विशुद्ध्याज्ञाब्रह्मरन्ध्रेषु

गमपधनिस । रि । सरिगारिगामर्ग । ममपमधपप-धनिधनिधनिस । प्रस्तारः ।

प्रस्वस्तारः पविपरितः(?)[2] प्रसादः । यथा — सनि । निस । सनिध । धनिसा । सनिप[3] । पधनिसा । सनिधपम[4] । मपधनिसा । सनिधपमग । गमपधनिसा । सनिधपमगरि । रिगमपधनिसा । सनिधपमगरिसा[5] । सरिगमपधनिसा । अ-थवा — सनिनिसानिधाधनिपधा । धपा । पमा । मपा । गागरिरिसः । प्रसादः ।

द्वौ द्वौ स्वरौ विकल्पौ सञ्चरन्तावारोहक्रमेणा(रोह-क्रमेणा?)वरोहादुद्वाहितः । सरि । रिसरि । ग । गमप । पध । धनि । नीस । सनिधा धपपमामगागरि । रीसा(?) उद्वाहितः ।

---

१. 'गा', २. 'पि', ३. 'सा', ४., ५. 'सानीधाप' ख. पाठः. ६. 'स' क. पाठः.

अयमेव द्विरभ्यस्तैरुपलोलकः। सरिसरि। रिगरिग। गमगम। मपमप। पधपध। धनिधनि। निसनिस। सनिसनि। निधनिध। धपधप। पमपम। मगमग। गरिगरि। रिसरिस। उपलोलकः।

एकादिक्रमेणान्तरस्वरेष्वारुह्य पुनर(व)रोहणक्रमेण स्थायिनं स्वरं गत्वा परिवारक्रमेणैव एकैकाभिवृद्ध्या यत्र स्वरा उच्चार्यन्ते स क्रमः। अयमेकरूपत्वात् प्रस्ता(र? रे) भिद्यते। सरिरिस। सरिगा। गरिस। सरिगमा। मगरिसा। सरिगमपा। पमगरिसा। सरिगमपधा। धपमगरिसा। सरिगमपधनी। नीधपमगरिस। सरिगमपधनिस सनिधपमगरिस। क्रमः। अ(था? थवा)न्तरस्वरमारुह्य काकेलीं[1] गत्वा तेनैव क्रमेणावरुह्य स्थायिन्यागम्यते स क्रमः। सगनि निगस। क्रमः।

आद्यं तृतीयं ततो द्वितीयं त(तो?)तश्च चतुर्थमनेनैव क्रमेणान्यानप्यारोह्य मन्द्रान्निष्कूजितः। कोहलमते च एकान्तरस्वरारोहान्निष्कूजितः। सगारिगमपा। मधापनी। धसा।

तारादेकान्तरस्वरावरोहा(त्) त्रिरावृत्त्या कलात्रयकरणात् सर्वेषां क(ल? ला)त्रयकरणात् (प्रा? ह्रा)दमानः। साधासाधासाधा। नीपानीपानीपा। धौमाधौमाधामा। पागापागापागा। मारीमारीमारी। गासागासागासा। ह्रादमानः। (साधासाधासाधा। नीपोनीपोनीपों। धौमाधौमाधामा। पागापागापागा। मारीमारीमारी। गासागासागासा ह्रादमानः।?)

समनन्तरस्वरमारुह्य द्वैकले स्थित्वा पुनः स्वरोऽन्तरे अर्ककलामारोह(व ?)ति । पुनश्चानन्तरमेवाद्यकलामवरोहति स रञ्जितः । सरि । रिग । रिगमग । गमपम । मपधप । धपनिध । पनिधनी ।

आरोहावरोहाभ्यामादौ स्वर(य ?)मुच्चार्य प्राक्स्वरोच्चारणान्ते क्रमशोऽष्टकल आवर्तकः । सरिगम । पधनिस । सनिधप । मगरिस । आवर्तकः । अथवा सग । गपपनि । सधासधा । नीपापगा । गसा । आवर्तकः ।

पुनरेकस्वरं चतुर्थं लङ्घयित्वा पञ्चमं स्वरं प्राप्य पुनरप्यन्तरान् त्रिस्वरानवरोहन् चतु(र्थं) लङ्घयन्नाद्यं स्वरं षड्जं गच्छेत् । आरोहावरोहाभ्यां क(लोऽ ? ला)ष्टकेन तथैवं तारादारभ्य सर्वस्वराणामारोहानवरोहं(?) षोडशकलः परिवर्तकः । स च लो(को ? के) ओहाडीत्युच्यते । सरिगपा । पमगसा । रिगमध । धपमरि । गमपनि । निधपगा । मपसधा । सनिधमा । मपधसा । निधपगा । गमनिध । पमरिरि । गमधा । मपगसा । सरिगपा । इति परिवर्तकः ।

स्वरद्वये हि ककलयः आरोहक्रमेण तृतीयस्वरं परिहरन्नारोहक्रमेणैवोपरितनद्वस्वरद्वयमाक्रमननेनैव क्रमेणावरोहः(?) शेषानपि स्वराननेनैव क्रमेणारोहन्नवरोहन्नष्टादशकल उद्घटितः । सारिमपा । पमरिसा । रिगपधा । धपगरी । गमधनी । नीधमगा । मपनिसा । सनिपमा । मपनिसा । निधमगा ।

---

१. 'पपागा', २. 'तुर्लङ्घ', ३. 'ग', ४. 'धा', ५. 'साबीप', ख. पाठः.

गमधनी । धपगरी । रिगपधा[1] । पमरिसा । सरिमपा । मग-रिसा[2] । उ(द्घाहि?द्घटि)तः ।

त्रिभिः स्वरैरारोहक्रमेण वा एककलादारभ्य यावत् षट्कलमित्येवं कलामानादाक्षिप्तकः । सरिगा । नु । रिगमा । नु । मप । नु । पधनी । नु । सनीसा । नु । धपमा । नु । मगरी । नु । गरिसा । नु । इत्याक्षिप्तकः ।

प्रथमात् स्वरानन्तरं परित्यज्य स्वरद्वये च गत्वा तेनैव क्रमेणारोहणादेककलादवरोहणेऽपि चैककल इति द्विकलसंप्रदानश्च द्वात्रिंशतिकलः (सम्प्रदानः) । सिगमम । मरिस । रिमप । पगरिग । पगध । धमग । मधनी[3]निपम । पनिसा । धधपा । धनिसा । पनिसानिपमपा । मधनीसमगा । गपधा । पगरी । रिपमा । मरिसा । सगमा । गरिसा । सम्प्रदानः । अथवा—सगम । मगसा । रिमपा । पमरी । गपधा । धपगा । मधनी । निधमा । पनिसा[4] । सनिपा । सम्प्रदानः ।

सम्प्रदानस्यैव द्विकलयोगेन हसनाद्धसितः । सगमा । मरिसा । रिमप । पगरि । गपध । धमग । मधनि । निपम । पनिस । सधप । सनिध । निपम । मधनि[5] । सधप । पनिसनिपम । मधनि । धमगा । गमपधा । पगरि । रिमपा । मरिसा । सगमा । गरिसा । हसितः ।

हसितवत् स्वरत्रयारोहणेन चतुष्टयारोहणेन वा उभयथाप्येककलो हुङ्कारः । सरिग । गरिसा । रिगमा ।

१. 'धा । मपरीसा' ख. पाठः. २. 'री' क. पाठः. ३. 'नि', ४. 'सा । ससनि', ५. 'री' ख. पाठः.

मगरी । गमपा । पमगा । मपधा । धपमा । पधनी । निधपा । धनिसा । सनिधा । पधनी । निधपा । पधनी । धपमा । निपधा । पमगा । मगरी । रिगमा । गरिसा । सरिगा । अथवा—सरीगम । मगरिस । गमप । पमगरि । गमपध । धपमग । मपधनि । निधपम । पधनिस । सनिधप । निधपम । मपधनि । निधपमागा । गमपधा । पमगरि । रिगमपा । मगरिसा । सरिगम । अष्टादशकलो हुङ्कारः ।

तारात् सप्तमं स्वरं गत्वा पुनस्तत्रैवमागत्यावरोहक्रमेण स्वरद्वयोच्चारणेन कलाचतुष्टयकारणनात् (?) सन्धिप्रच्छादनः । सनिसनिसनि (सनि) । निधनिधनिध(निध) । धपधपधपधप । पमपमपमपम । मगमगमगमग । गरिगरिगरिगरि । रिसरिसरिसरिस । सरिसरिसरिसरि । रिगरिगरिगरिग । गमगमगमगम । मपमपमपमप । धपधपधपधप । धनिधनिधनिधनि । निसनिसनिसनिस । सन्धिप्रच्छादनः ।

अंशस्वरं चतुरुच्चार्य तदनन्तरस्वरद्वयस्य द्रुतोच्चारणादनेनैव क्रमेणारोहणादेककलो विधुतः । सासासासा । रिग । रीरीरीरी । गम । गागागागा । मप । मामामामा । पध । पापापापा । धनि । धाधाधाधा । रिस । विधुतः ।

तारादेकान्तरस्वरावरोहात् क्रमेणोद्गीतिः । सध । निपध । मपग । मरिग । स । उद्गीतः ।

ओङ्कारवत् समन्तरं संयुक्तद्विरस्वराक्षरमारोहेतः (?) । ततो द्वौ द्वौ स्वकम्पनयुक्तौ कलान्तरयो(गे ? गा)देव प्रसक्तौ

---

१., २., ३., ४. 'नी', ५. 'मा' क. पाठः,

मन्द्रौ कार्यौ । इत्येककलस्वरयोगात् गात्रवर्णः । धानीसा ! नीधा । पाधानी धप । मापाधा । मग । गमापा । गरि । सारीगा । रिपा इति गात्रवर्णः । नन्दयत्यलङ्कारः (?) ।

यस्मिन् वर्णे स्थिता ये च अलङ्कारा मनोहराः ॥ १२४ ॥
तानि(इ ?)दानीं प्रवक्ष्यामि भरतोक्तविधानतः ।
प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त(मे ? ए)व च ॥ १२५ ॥
तथा प्रसन्नमध्यस्तु समो (र ? रे)चित(मे ? ए)व च ।
प्रसाद + प्रसादश्च स्थायिवर्णाः समाश्रयाः ॥ १२६ ॥
ज्ञेयाद्येतदलङ्कारादमौलक्षणलक्षिताः (?) ।
अथ सञ्चारिणौ भूतकृत्यमाना निबोधतः (?) ॥ १२७ ॥
मन्द्रतारप्रसन्नश्च बिन्दुः प्रेङ्खोलितस्तथा ।
रुहरश्चैव वेणुश्च रञ्जितश्चोपलालकः ॥ १२८ ॥
आवर्तकः परावर्त इति सञ्चारिसम्भवाः ।
अलङ्कारास्तु विज्ञेया ए(का)(दे ? द)श मनोहराः ॥ १२९ ॥
निष्कूजितश्चकोरो हसितो न (?) बिन्दुरेव च ।
प्रेङ्खोलितस्तथोत्क्षिप्तो विधुतोद्वाहितौ तथा ॥ १३० ॥
प्राद(ना ? मा)नः[1] सम्प्रदानः सन्धिप्रच्छादनस्तथा ।
प्रसन्नादिः प्रसन्नान्त आरोहिणी त्रयोदश ॥ १३१ ॥
विधूतो[2] गात्रवर्णश्च उद्गीतोद्वाहितो वेणुः ।
पञ्चैते चाप्यलङ्कारा विज्ञेयाश्चावरोहिणी ॥ १३२ ॥
प्रसन्नादिः प्रसन्नान्तः तोबिन्दुः (?) कम्पितरेचितौ ।
प्रेङ्खोलितस्तारमन्द्रो मन्द्रता(रस ? रस)मस्तथा ॥ १३३ ॥

१. 'ह्लादमानः', २. 'विधुतः' इति पूर्वं पठितौ ।

सन्निवृत्तः प्रवृत्तश्च उपलोलकवेणुकौ ।
द्वादशैतेऽप्यलङ्कारा: सर्ववर्णाश्रयाः स्मृताः ॥ १३४ ॥
मन्द्रो(त?) मध्यश्च तारश्च अवलोकितमेव च ।
अपामाख्यस्तयोभिश्च सर्ववर्णनताः (?) स्मृताः ॥ १३५ ॥
सप्तरूपगतज्ञेया(?)दलङ्कारा बुधैरिमे ।
नैतेषां तु ध्रुवास्विष्ट अतिवर्णा प्रकर्षणा (?) ॥ १३६ ॥
धनहिवर्णप्रकर्षस्तु ध्रुवाणा (?) संप्रशस्यते ।
सतेमावाप्यथवा बिन्दुः रेचान्ये (?) प्रतिकर्षणाः ॥ १३७ ॥
ध्रुवाणां च प्रयो(ने ? गे) तु कार्याश्चारोहणस्वराः ।
गुरुः सा ++++ भिर्ध्रुवा कार्यार्थदर्शिभिः ॥ १३८ ॥
वर्णा(ना)न्तु पुनः का (र्यः ? र्यं) कृशत्वं च ध्रुवास्वलम् ।
यत्र प्रयोगे गच्छन्ति तांश्च वर्णान् निबोधत ॥ १३९ ॥
स्थायिवर्णादृते चैषां सम्प्रवक्ष्यामि लक्षणम् ।
क्रमशो दीप्यते[१] यस्तु प्रसन्नादिः स कथ्यते ॥ १४० ॥
व्यस्तोच्चारित(मे ? ए)वैष प्रसन्नान्तोऽभिधीयते ।
आद्यन्तयोः प्रसन्नत्वात् प्रसन्नाद्यन्त(मि ? इ)ष्यते ॥१४१॥
प्रसन्नमध्यो मध्ये तु प्रसन्नत्वादुदाहृतः ।
सर्वसामात्(?) समा ज्ञेया स्थितश्चैकस्वरेऽपि हि ॥ १४२ ॥
बिन्दुरेककलं तारं स्पृष्ट्वा तु पुनरागतः ।
स्यान्निवृत्तः प्रवृत्तश्च मन्द्रां (ग) त्वा समागतः ॥ १४३ ॥
आक्रीडनीलयो (?) यस्तु स च वेणुः प्रकीर्तितः ।
उरोगतः कम्पितः स्यात् कम्पनाच्च कलात्रयः ॥ १४४ ॥

---

१. 'दि' क. पाठः.

कण्ठे निरुद्धः पवनो रुहरो नाम जायते ।
त्रिकला कम्पना तद्द (?) रेचिराख्यः शिरोगतः ॥ १४५ ॥
गतागतप्रवृत्तो यः सप्रेङ्खोलित(मु ? उ)च्यते ।
क्रमागतस्तु यस्ताश्चेत् ततः पञ्चतुमोऽपि (?) वा ॥ १४६ ॥
तारमन्द्रप्रसन्नास्तु ज्ञेयो मन्द्रगतो बुधैः ।
लङ्घयित्वा परं म(न्द्र ? न्द्रं) क्रमात् तारगतिं गतः ॥१४७॥
मन्द्रतारप्रसन्नस्तु विज्ञेयारोहणा बुधैः ।
एकस्वराधिरूढः क्रमशः प्रस्तारसं(ज्ञि ? ज्ञ)को ज्ञेयः ॥१४८॥
समनन्तरो द्वापैत्युद्वाहितो द्विक लेव ( ? ) ।
आरोहत्येककलां + + + + प्रसाधयति ॥ १४९ ॥
उद्वाहित एव स्यादुपलोलकसंज्ञको द्विरभ्यस्वना (?) ।
एकं ( द्वौ ? द्वे) त्रीणि गच्छन् स्वरक्रमेण क्रमो ज्ञेयः ॥
एकान्तरमारुह्य प्रत्येकान्तरस्वरो यस्तु (?) ।
निष्कूजितसंज्ञोऽसौ ज्ञेयः सूरिभिरलङ्कारः ॥ १५१ ॥
क्रमयोगेनासौ ज्ञेयः संचार्यमकान्तरस्वरे (?) ।
त्रिकलस्वपरषड्जमेवमारोहि (?) ह्रादमानः स्यात् ॥ १५२ ॥
अथ रञ्जितस्तु समनन्तरस्वरे द्वे कले पुनः स्थित्वा ।
अर्थकलामारोहि पुनरेतत् चापको (?) हि स्यात् ॥ १५३ ॥
आरोहतः ।
आवर्तकश्चतुर्षु स्वरेषु समनन्तरेषु सम्भवति ।
आरोहणावरोहणविधिना चैकान्तरेष्वपि वा ॥ १५४ ॥

१. 'द' ख. पाठः.

ज्ञेयो निरन्तररूर्ध्वेष्टकलः सान्तस्वस्थ (?) कार्यः ।
प्राज्ञैः कलाश्चतस्रः स्वहत्यावर्ततो नित्यः ॥ १५५ ॥
अधिरुह्य च स्वरांस्त्रीन् स्वरान्तरं लङ्घयति च निवृत्ते ।
पुनरपिच परावृत्त्या परीवर्तेषु कलो (?) ज्ञेयः॥ १५६॥
यः स्वरापतितौ तथा परस्वन्तरस्वरो भवति ।
एककलश्च तथा भव तदुद्घाहितो नित्या (?) ॥ १५७ ॥
माक्षिप्तत्रिस्वरारजपृथगेककलात्रयकृतश्च (?) ।
एककलस्त्वधरः स्यात् षट्कलिको वापरो ज्ञेयः॥ १५८ ॥
आक्षिप्तवच्चतुर्भिः स्वैरैस्त्रिस्वरैः कलान्तरोपेतैः ।
एकान्तरस्वरक्रम इह गदितः संप्रदानस्तु ॥ १५९ ॥
द्विरपि द्विकलं गदितं हसितमिहोच्चारिततताेऽपहसितम् ।
समनन्तरस्वरकृतं चाक्षिप्तकमिव बुधैर्ज्ञेयम् ॥ १६० ॥
समनन्तरस्वरेषु हसितवद्यपरश्चतुःपरो (?) वापि ।
आरोहत्येककलो हुङ्काराख्यः स विज्ञेयः ॥ १६१ ॥
स्थानान्तरमारुह्य प्रत्येकद्वयश्चतुष्कलो ज्ञेयः ।
क्रमनोर्ध्वपरिक्षेपः (?) सन्धिप्रच्छादनो नाम ॥ १६२ ॥
आदौ पदमुच्चार्य यः स्याद् द्विस्वरो लघुनि वर्णः ।
समनन्तरमारोहत्येककला तद् विधूतं तु ॥ १६३ ॥
आदा ++ वरोही स्यात् प्रस्तारोऽन्तेऽवरोहते यत्र ।
प्रमाणतश्च कलासु च वन्त्याकार(?)मुद्गीतम् ॥ १६४ ॥
हुङ्कारवदारोहे अनन्तरांस्तु स्वरान् कलान्तरयोः ।
द्वौ द्वौ च कम्पमतौ (?) स्त्रौ च तस्य प्रसन्नौ द्वौ ॥ १६५ ॥

वर्णालङ्कारविधौ विज्ञेयो गात्रवर्ण इत्येवम् ।
आकारोकारतया दीर्घाक्षरमन्यदपि योज्यम् ॥ १६६ ॥
गीतालङ्काराणां करणविधिरयं समुद्दिष्टः ।
एभिरलङ्कर्तव्या गीतिर्नामाविरोधेन ॥ १६७ ॥
स्थाने चालङ्कार कुर्याद् गाम्भुरसि किञ्चित् उदावेध (?)।
बहवोऽलङ्काराः स्युर्वर्णविहीनाः प्रयोक्तव्याः ॥ १६८ ॥
शशिविरहितेव रजनी विजलेव नदी लता ह्यपुष्पेव ।
अनलङ्कृतेव नारी गीतिरलङ्कारहीना स्यात् ॥ १६९॥
अलङ्कारास्त्रयस्त्रिंशदेवमेते मयोदिताः ।
नोदीयोऽपि (?) तेऽप्यत्र प्रत्येतव्या मनीषिभिः ॥ १७० ॥

तत्र प्रस्तारो यथा — षड्जादिषु सरिगमपधनिसा प्रसन्नादिः । सनिधपमगरिसा प्रसन्नान्तः । सरिगमपधनिसा निधपमगरिसा प्रसन्नाद्यन्तः । सनिधपमगरिसा सरिगमपधनिसा प्रसन्नमध्यमः । सरिगमपधनिसा । समं स स्यात् (?) स बिन्दुः । सा द स सा निवृत्तः प्रवृत्तः (?) सरिगमपधानि । निधपमगरिस । वेणुः । सरिगमपधनिसा । कम्पितः । सनिरिगमपधनिसा । (कु) हरितः । सरि नु । गमपधनिसा । रेचितः । सरिरिस । रिगागरी । गमामगा । मपापमा । पधाधपा । धनीनिधा । निसासनी । संप्रेङ्खोलितः । सरिगमप । निरिगमप । रिगमपधरि । गमपध । गागम । पधनिग । मपधनि । म । मपधनिसम । तारमन्द्रप्रसन्नः । सप । मगरिसरिधमपगरिगनि । धप । मग । मस । निधपम । मन्द्रतारप्रसन्नः । सरिरिस । रिगगरिस । सरिगम । मगरिस । सरि-

गमप । पमगरिस । सरिगमपध । धपमगरिस । सरिगमप-धनि । निधपमगरिस । सरिगमपधनिसा । सनिधपमगरिसा । प्रस्तारः । सनिनिस । सनिध । धनिस । सनिधप । पधनिस । सनिधपम । मपधनिसा । सनिधपमगरी । रिगमपधनिसा । सनिधपमगरिस । रिगमपधनिस । प्रसादः । सरिगमपधनि । निसधनिनिधधप । पममग । गरिरिसा । उद्वाहितः । सरिसरि । रिगरिग । गमगम । मपमप । पधपध । धनिधनि । निस-निस । सनिसनि । निधनिध । धपधप पमपम । मगमग । गरिगरि । रिसरिस । उपलोलकः । सरिरिस । सरिग । गरिस । सरिगम । मगरिस । सरिगमप । पमगरिस । सरिगमपध । धपमगरिस । सरिगमपधनि । निधपमगरिस । क्रमा । सगरिम । गपमध । पनिसध । निष्कूजितः । सधस । धनिपनिप । धम-धम । पगपग । मरिमरि । गसगस । ह्लादमानः । सरिगरि । रिगम । पग । गम । पम । मप । धप । पध । निध । धनि । सरिनि । रञ्जितः । सरिगमपधनिसा । सनिधपमगरिसा । आ-वर्तकः । सरि । गप । पम । गस । रिग । मधा । धप । मरि । गम । पनि । निध । पगा मपधसा । सनि । धमा । निध । पगा । गम । धनि । धम । परि । रिग । मधा । पम । गसा । सरि । गपा । परिवर्तकः । सरि । मपा । पम । रिसा । रिग । मपधा । धप । गरि । गमधनि । निधमगा । मपनिसा । पनि-पमा । पधनिसा । सनिपमा । मपनिसा । निधमगा । गम-धनि । धपगरि । रिगपध । पमरिसा । उद्वाहितः । सारीगा री

गामा । गामापा । मापाधा । पधनि[1] । धनिस । सनिध । निधप । धपम । पमग । मगरि । गरिसा । आक्षिप्तकः । सगमा मरिसा । रिमपा । पगरी । गमधा । धमगा । मधनी । निपमा[2] । पनिसा । सधप । धनिसा । सधपा । पनिसा । निपमा । मधनी । धमगा । गपधा । पगरी । रिपमा । मरिसा । सगमा । गरिसा । सम्प्रदानम् । मगम । मरिस । रिमप । पगरि ।

दक्षिणे अतीतः चित्रवृत्तौ अगतः जातिप्रयोगात् समन्विता (?)

प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी ।
सम्भाविता(स्तृ ? तृ)तीया च चतुर्थी पृथुला स्मृता ॥१७१॥
त्रिर्निवृत्ता च या गीतिः सा (मा गतिः ? गीतिर्मागधी) [स्मृता ।
अर्धकालनिवृत्ता च विज्ञेया त्वर्धमागधी ॥ १७२ ॥
(सम्भाविताः ?)

---

*अलङ्कारा मया प्रोक्ता यथावन्मुनिसत्तम ! ।
अथ गीतिं प्रवक्ष्यामि छन्दोऽक्षर ++++ ॥ १७३ ॥
(सम्भाविता) च विज्ञेया गुर्वक्षरसमान्विता ।
पृथुलाख्या च विज्ञेया लघ्वक्षरसमन्विता ॥ १७४ ॥

दक्षिणे मार्गपृथुला गीति वार्त्तिके मार्गे सम्भाविता । चित्रैर्मार्गे मागधिः अष्टौ कला (?) । तालै[3]प्रयोगक्रमेण ।

---

१. 'नि । पधनि । धनिसा' क. पाठः. २. 'नी', ३. 'लक्र' ख. पाठः.

* अस्थानस्थमिदं पद्यं 'दक्षिणे अतीतः' इत्यतः पूर्वं निवेशनीयमिति भाति ।

चित्रे चैककले ताले विज्ञेया गीतिर्मागधी ।
वार्त्तिके द्विकला ज्ञेया गीतिः सम्भाविता बुधैः ॥ १७५ ॥
दक्षि(णो ? णे) पृथुला गीतिस्तालैर्ज्ञेया चतुष्कले ।
अनेनैव विधानेन गातव्या गीतयो बुधैः ॥ १७६ ॥

चित्रे चैककले एव तालः कः (?) तं द्विमात्रिकप्रयोगात् वार्त्तिके द्विकले एव तालः चतुर्मात्रिकप्रयोगाद् दक्षिणे चतुष्कले एव तालः अष्टमा(त्र ? त्रिक)प्रयोगाद् (द्वि ?) ।

द्विगुरुद्विनिवृत्ता च चित्रे गीतस्तु मागधिः ॥ १७७ ॥
लघुप्लुतकृता चैव तदर्धे चार्धमागधिः ।
सम्भाविता गुरुर्वृत्तौ पृथुला दक्षिणे लघु ॥

यथा— मागधी । अथ सम्भाविता पृथुला वार्त्तिके सङ्ग्रहाद् दक्षिणे अधीतः चित्रवृत्तौ अगतः जातिप्रयोगाः (?)

वृत्तिर्नाम चिकथितम् । तथा दक्षिणो वृत्तिश्चेति त्राति मात्रा अष्टौ चतु चतुर्द्विक्रमेण(?) यथा—

(धू ? ध्रु)वका सर्पिणी कृष्ट्या वर्तिन्यथ विसर्जिता ॥
विक्षिप्ता च पताका च पतिता चाष्टमी स्मृता(: ?) ।
तत्र ध्रुवकाचशब्दस्याः(?) सर्पिणी वामगा भवेत् ॥१७९॥
कृष्ट्या दक्षिणतो या(ना ? ता) वर्तिनी चाप्यधोगता(:?)।
विवर्तिता बहिर्याता विक्षिप्ता कूर्चिता भवेत् ॥ १८० ॥
पताका चोर्ध्व(का ? गा) ज्ञेया वनितां भ्रम्मिगा (?) भवेत् ।
वार्त्तिके च ।

१. 'ला', २. 'ले' ख. पाठः ३., ४. 'विर्ति', ५. 'द्विः क' क. पाठः. ६. 'ब', ७. 'त' ख. पाठः.

"दक्षिणा चोर्ध्वगा चित्रे द्वे तु ध्रुवकासर्पिणी ।
कृष्टया पद्मिनी + + + + + + + + + + + + (?) ॥"

अथवा

प्रथमे मध्यमाङ्गुलीचो(?) द्वितीये सार्धनि + + ॥ १८१ ॥
तृतीये मुष्टिमोक्षश्च (च)तुर्थे करपातना ।
ध्रुवका सर्पिणी चित्रे दक्षिणाविती चित गीता (?) ॥१८२॥

उभयवाद्यप्रवर्तनवशात् प्रतीतिश्चागीतप्रधानदक्षिणा वृत्तिः उभयप्रधाना वृत्तिः मेबित्ति(?) वाद्यप्रधाना चित्रवृत्तिः। इदानीं प्राधान्यं ज्ञापयति पाणिकृतं विवर्तितम् । तदुक्ता तालयतिमार्गप्रधा(न ?)न्यादासां यथासंख्यं स्वरंव्यञ्जकानि (?) भवन्ति। चित्रे समायाति + द्रुतो लयः उपरिपाणिः मागधी धनामुखोऽवयवः वार्तिके स्रोतोगता यतिमध्यो लयः समपाणिः सम्भाविता । अत्र गवोवलयवः उदग्दक्षिणे गोपुच्छा यदि(?) विलम्बितो लयः अधमपाणिः पृथुला गीतितत्त्वं चावयवः वृत्तीनां च वाद्या समानासमानागततीतग्रहैः कार्यम्(?)। तत्र चित्रे अनागतोग्रहः अभिसर्वो(?) वाद्यप्रयोगः पश्चात् कलाचतुष्टयेऽतीते सति वाद्यग्रहयोगैः सोऽधःपाणिरुच्यते। तन्मागधी नाम गीतं विपरीतयोजन(त ?)या दृश्यते । तद्यथा—दक्षिणे मार्गे प्रवृत्ता गीतिर्यथा चित्रे प्रयुज्यते, तथा पृथुला गीति(मना ? र्मा)गधीत्युच्यते । वृत्तिमार्गे च चित्रे यद्दा प्रयुज्यते, तदा सा मागधी सम्भाविताः शब्दाः वाद्याच्या (?) द्विः परिवृत्तक्रमेण योज्यते। यात्रद्दक्षिणा च चित्रो

१. 'मां', २. 'प्र', ३. 'द', ४. 'ति', ५. 'गं', ६. 'द्वीः' ख. पाठः.

मार्गः प्रयुज्यते। आवापादिक्रमेणाष्टधा चतुर्धा चेति। एवमुक्तं भवति। चित्रे च द्विमात्रा काला(?) सैव मागधी गीतिः सम्भावितयो गीत्या प्रयुज्यते। तदा चतुर्मात्रिकवृत्तिशब्देनोच्यते। यदा तु चित्रे माग(धीं ? धी) गीतिः सम्भावितशब्दवाच्या द्विगुणिता अष्टमात्रा पृथुलाशब्दवाच्या दक्षिणमार्गे भवति। त्रीत्रीन्निवृत्तिस्त्रिरावृत्तिमागधी यथा भवमीशं(?) पदं गीत्वा प्रथमे कलां निर्वाप्य विलम्बितलयेन यदा द्वितीया कला मध्यमवयेन(?) देवमित्यनेन वरदेन शर्वमिति संहितेन गायति। तत्रापि च तृतीयां कलाद्रुतवयेन देवशर्वपदद्वये वन्दे इति पदद्वयेन वन्दे इति पदान्तरसहितेन निर्वाहयति कलावयव्यापातनाद्(?)। यथा—मामासासा। मासासामा। ससमासम। मरिरिनि। मगधदेशोद्भवत्वान्मागधी। अन्ये तु निवृत्ता मागधीं पठन्ति अर्धमिति पद(स्स ? स)म्बन्ध्यर्धपादत्वेनार्धमागधी। नच पादाद्यनिवृत्तिनिवृत्तावर्धः प्रवृत्तिनिवृत्तिगः हेतुर्मन्तव्या(?)। यतः सामवेदगीतप्रथादेव आवृत्तिष्वर्थ आद्रियत इति। तदुक्तं—य उ वृत्त्यात्मा जातवेदसमिति। अत्र वेदशब्दपर्यवसिता सम्भाविताः लघुप्रयाव(?)पृथुलाभूयस्त्वात् पदग्रामस्य पृथुलेत्युक्त्वा स्वरतानु इति मार्गलया मार्गत्रयो गीतिः विधौ लयः प्रयोगे नवधा द्रष्टव्याः(?)। लयसम्प्रयोगं दर्शयति—दक्षिणो मार्गो वार्त्तिको मार्गश्चित्रमार्ग इति। दक्षिणावृत्तो लयत्रयं वार्त्तिकमार्गश्चित्रमार्गो ध्रुवमार्गश्चेति वृत्तिमार्गप्रवृत्तौ लयत्रयं चित्रमार्गो ध्रुवमार्गः

१. 'यां', २. 'पा' ख. पाठः.

शून्यमार्गश्चेति । चित्रे लयत्रयमेवं नवधा ल(य)योगश्चित्रादिमार्गेषु द्रष्टव्यः । इति गीत्यध्याये प्रतिपादितम् । यथा चित्र एको गुरुः एको लघुः एको द्रुतम् ।

एकद्विगुणो वृत्तौ तद्द्विगुणो दक्षिणे तथा ।
द्विमात्रा स्यात् कलाचित्रचतुर्मात्रा तु वार्त्तिके ॥ १८३ ॥
अष्टमात्रा तु विद्वद्भिर्दक्षिणे समुदाहृता(ः?) ।
वार्त्तिके दक्षिणे इति (?) ॥

इदानीमवसरप्राप्तानां जातीनामुद्देशमाह — तत्र जातयोऽष्टादशैव । एता(ः)समांशभेदेन शतं चत्वारिंशदधिकं सङ्ख्यया भवन्ति । तत्र स्वरे—

साधारणकृतास्तिस्रो विज्ञेया जातयो बुधैः ॥ १८४ ॥
मध्यमा मत्सरी चैव तथा वै षड्जमध्यमा ।

इति सप्त षड्जग्रामाश्रयाः म(?) ।

गान्धारी मध्यमा चैव पञ्चमी च तथैव हि ॥ १८५ ॥
गान्धारोदीच्यवा चैव तथा गान्धारपञ्चमी ।
ततश्च रक्तगान्धारी मध्यमोदच्यिवा तथा ॥ १८६ ॥
अङ्घ्री च नन्दयन्ती च कर्मारव्यथ कैशिकी ।
एवमेकादश ज्ञेया मध्यमग्रामसंश्रयाः ॥ १८७ ॥

आभ्योऽष्टादशजातिभ्यः सप्तस्वराख्याश्चोक्ता द्विधा शुद्धा विकृताश्चेति । तत्र शुद्धा अन्यूनस्वरा स्वरस्वरग्राहान्यासाश्च(?)एभ्यो लक्षणेभ्योऽन्यतमेन द्वाभ्यां बहुभिर्वा लक्षणैर्वाप्यापि तुष्टा(?)न्यासवर्जं विकृतसंज्ञा[2] भवन्ति । तत्र

१. 'का' क. पाठः. २. 'वर्जा भ' ख. पाठः.

न्यासबलमाह — तत्र न्यासविधौ यज्जातयः शुद्धाः तासु नामकारि(?) यो न्यासः नियमेन मन्द्रो भवति। विकृतासु च नामकविकारी(?) वा मन्द्रो भवतीत्यनियमः। तत्र शुद्धानां जातीनां शुद्धत्वं विकृतत्वं च रूपद्वयमस्ति। एकादशानां जातीनां विकृतोऽद्भवत्वाद्[१] विकृतत्वमेव रूपं भवति। ननु शुद्धत्वमिति कुत एतत्। ता हि परस्परसंसर्गोज्जाय(ते ? न्ते)। तथाचाह भरतः —

"शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते।
पुनरेवाशुद्धकृता भवन्त्यथैकादशपरास्तु॥
तासां यास्तु निवृत्ताः स्वरेष्वथांशेषु जातिषु च।
जातीस्ता वक्ष्यामः संक्षेपेण क्रमेण चैवात्र॥
षड्जाया मध्यमायाश्च संसर्गात् षड्जमध्यमा।
षड्जायाश्चैव गान्धार्या जायते षड्जकैशिकी॥
तयोरेव सधैवत्योः षड्जोदीच्यवती भवेत्।
आसां समध्यमानां तु गान्धारोदीच्यवा भवेत्॥
गान्धार्या मध्यमायाश्च पञ्च(मीं ? म्या)श्चैव सङ्करात्।
सधैवतीनामासां तु मध्यमोदीच्यवा भवेत्॥
आसां स्याद् रक्तगान्धारी नैषादी चेच्चतुर्थिका।
आर्षभ्यास्तु भवेद्यन्ध्री[२] गान्धार्याश्चैव सङ्करात्॥
अनयोस्तु सपञ्चम्योर्नन्दयन्ती प्रजायते।
सन्निषादा स्वगान्धार्याः कुर्युः कार्मारवीमिमाम्॥

१. 'द्भ' क. पाठः. २. 'ध्री' ख. पाठः.

गान्धारी पञ्चमी चैव तथा गान्धारपञ्चमी ।
आर्षभी धैवती वर्ज्याः कैशिकीमिति सङ्कराः(?) ॥"

इदानीं विभागमाहुः—

चतस्रो जातयो नित्यं ज्ञेयाः सप्त स्वरा बुधैः ।
चतस्रः षट्स्वराश्चाद्या दश पञ्च स्वराः स्मृताः ॥१८८॥

एतदेव स्फुटं भवति ।

मध्यमोदीच्यवा चैव तथा वै षड्जकैशिकी ।
कार्मारवी च सम्पूर्णा तथा गान्धारपञ्चमी ॥ १८९ ॥
षड्(ज्य ? जो)न्ध्री नन्दयन्ती च गान्धारोदीच्यवा तथा ।
चतस्रः षट्स्वरा ह्येता ज्ञेयाः पञ्चस्वरा(:) पराः ॥ १९० ॥
निषादवत्यार्षभी + धैवती षड्जमध्यमा ।
षड्जोदीच्यवती चैव पञ्चषड्जा त्रिधा स्मृताः(?) ॥
गान्धारी रक्तगान्धारी मध्यमा पञ्चमी तथा ।
कैशिकी चेति विज्ञेयाः पञ्चैते मध्यमाश्रिताः ॥ १९२ ॥
षड्जग्रामे तु विज्ञेया गान्धारोदीच्यवा बुधैः ।
अन्ध्री च नन्दयन्ती च मध्यमग्रामसंश्रया(:) ॥ १९३ ॥
एवमेता बुधैर्ज्ञेया द्वौ ग्रामी को(?) विभागतः ।
यास्ता(:) सप्त स्वरा ज्ञेया याश्चैताः षट्स्वराः स्मृताः ॥
क्वचित् षाडवितास्तास्तु पक्षे चौडवितीकृताः ।

इदानीं लक्षणमाह—श्रुतिग्रहस्वरादिसमूहाज्जायन्ते जातयः । अतो जातय इत्युच्यन्ते । यस्माज्जायते रसप्रतीतिरारभ्यत इति जा(यतः ? तयः) । अथवा संकलस्य रागादे-

१. 'ज' ख. पाठः.

र्जन्महेतुत्वाज्जातय इति। यद्वा जातय इति जातयः। यथा नराणां ब्राह्मणत्वादयो जातयः। शुद्धाश्च विकृताश्चैवमत्रापि जातिलक्षणम्।

इदानीं विशेषलक्षणमाह—

ग्रहांशौ तारमन्द्रौ च षाडवौडुवित्ते तथा ॥ १९५ ॥

अल्पत्वं च बहुत्वं च न्यासोऽपन्यास एव च।
ज्ञेयते तद्यथा जाति देशजातीयलक्षणा (?) ॥ १९६ ॥

लक्षणं दशकस्यास्य संक्षेपेणाभिधीयते।

तत्रादौ जात्यादिप्रयोगो गृह्यते येनासौ ग्रहः। अंशवर्तिषष्टिभेदभिन्नो बोद्धव्यः। (तद्वे? नन्वे)वं ग्रहांशयोः को भेदः। उच्यते। अंशो वाद्येव परं, ग्रहस्तु वाद्यादिभेदभिन्नश्चतुर्विधः। यद्वा प्रधानाप्रधानकृतो भेदः। ग्रहो ह्यप्रधानभूतः। ननु कथमंशस्यैव प्राधान्यमुच्यते। रागजनकत्वाद् व्यापकत्वाच्चांशस्यैव प्राधान्यम्। यद्यपि सर्वजातीनां ग्रहोंऽशश्च प्रधानीभूत इत्युत्सर्गसिद्धम्। तथापि संवाद्यनुवादिविधिना चोद्यते। तथापि प्रथमचतुर्थषष्ठगीतेषु मन्द्रप्रकृतो विशेषः नियमः प्रथमे संवादित्वात् कथं भेदप्रयोगः। षड्जोदीच्यवामध्यमोदीच्यवारक्तगान्धारीगान्धारीपञ्चमीनां तु ग्रहा विवादि द्वेन(?) ग्रहस्तु आर्षभी धैवती निषादवत्यन्ध्री षड्जकैशिकी षड्जमध्यमा चेति। एवं नन्दयन्त्यामिति ग्रहविधि(:)। तथाचाह

---

१. 'प्र', २. 'डुम्बिते' ख. पाठः.

भरतः —

"ग्रहस्तु सर्वजातीनामंशवत् परिकीर्तितः ।
यत्प्रवृत्तो भवेद् गेयः सोंऽशो ग्रहविकल्पकः ॥"

अ(थवांशख ? थांशः क)थ्यते । अंशविभागः स दशविधो बोद्धव्यः । यस्मिन्नंशे क्रियमाणे रागाभिव्यक्ति(भि ?)र्भवति सोंऽशः । यस्माद्वारभ्य गीतः प्रवर्तते । न ग्रहस्स्वरितः (स्वं ? स्वां)शो द्वितीया तारमन्द्राभिव्यक्तिहेतुः स्वांशस्तृतीयः पञ्चमस्वरमारोहणं तारं कदाचित् षष्ठस्वरारोहणं पितारः । तथा गान्धार्याः षड्जस्तारः । निधनि[2]ध सा । यथा तारनियामकमन्द्रनियामकस्वरोऽप्यं[3]शसप्तस्वरावरोहणा । यथा मन्द्रांशायाः षड्जासं[4]स्थाने — सासासाधा इति । यश्च बहुप्रयोगतरः सोऽप्यंशः । यो रागस्य विषयत्वेनावस्थितः स्वरः सोऽप्यंशः । यत्र गीतमिति समाप्तिरिति सम्भाव्यते सोऽपन्यासः । सर्वविदारी मध्यमो भवति । सा च विदारी द्विविधा — गीतविदारी पदविदारी चेति । ननु विदारीशब्देन किमुच्यते । पादानां स्यादित्यादि विदारणा खण्डनमिति यावत् । गीतकेशी गीतखण्डमिति यावत् ।

इदानीं स न्यासोऽभिधीयते । तत्र प्रथमं[5]मविदारी मध्ये न्यासस्वराः प्रयुक्ताः । संन्यासः सोऽभिधीयते । अंशस्य विवादी यथा न भवति प्रथमविदार्यान्तेर्यादि प्रवृत्तो यदा भवति, तदासौ संन्यास इत्यर्थः ।

इदानीं विन्यासमाह — एष एव तु संन्यासस्वरः पदान्ते विन्यस्यते तदा विन्यासः । अतएव तदुक्तं भवति ।

१. 'स्वा', २. 'नी', ३. 'प्यां', ४. 'स', ५. 'मवि' ख. पाठः.

अंशस्य संवादी वा भवति यस्मोच्चैव प्रवर्तते ।
नेता च तारमन्द्राणां योऽत्यर्थमुपलभ्यते ॥ १९७॥
ग्रहापन्यासविन्याससंन्यासन्यासगोचरः ।
अनुवृत्तश्च यश्चेह सोंऽशः स्या(दं? द् द)शलक्ष(णं ? णः)॥
इति ।

इदानीं तारलक्षणमुच्यते — बलवति च श्रुतिकेंऽशे दुर्वबलेशांशे अंशस्वरप्रयोगादारभ्य पञ्चस्वरपरा तारगतिः । किमुक्तं भवति । पञ्चमस्वरमारोहणं तार इति चतुस्स्वरमारोहणं तार इति । नन्दयन्ती यथा — सासरिगसा । इति पञ्चमांशत्वात् षड्जस्तारः । आपञ्चमादिति योजना । अष्टम्या विदार्या बोद्धव्यः । पञ्चस्वरं यावत् तारविधिं यथा गान्धार्यी—निधनिसा । इति । वाशब्दात् सप्तस्वरस्यापि तारता भवति । चतुर्धा तार(गी ? ग)तिः तथाचाह भरतः—

"अंशात् तार(गीतं ? गतिं) विद्यादाचतुर्थ[2]स्वरादिभिः ।
आपञ्चमात् सप्तमाद्वा नातः परमिहेष्यते ॥"

इदानीं म(न्द ? न्द्र)मुच्यते — मृदुस्वरो म(न्दः? न्द्रः) । सा च मन्द्रगस्त्रिधा — (आं ? अं)शपरा न्यासपरा[3] (तप ? तत्प)रा चेति । अंशस्वरस्य[4] परो (यः स्या ? यस्मा)[5]दिति बहुव्रीहौ तस्मात् पूर्वो यः स्वरः स मन्द्रः । यथा धैवत्यां— धाध निधम पधमा । मामामा । एवमत्रा[6]पि न्यासस्वर इति । न्यासस्वरोऽप्येवमेव ।

---

१. 'स्तात्यैव', २. 'र्थं', ३. 'रा चे', ४. 'स्या', ५. 'रा', ६. 'त्र वि', ७. 'व ।' ख. पाठः.

इदानीं षाडवमुच्यते— षट्स्वरं[1] षाडवमिति । चतुर्दशजातिविषयत्वाच्चतुर्दशवि(धि ? ध): । चतसृणां जातीनां नित्यसम्पूर्णत्वे[2](न) तदभावाज्जात्यंशभेदेन तु सप्तचत्वारिंशत्प्रकारं च तद् भवति । तथाचाह भरतः— षट्स्वरं षाड(व ? वं) चतुर्दशविधं सप्तचत्वारिंशत्प्रकारं पूर्वोक्तं लक्षणं चास्य । चतुःस्वरात् प्रभृति न मार्गः शबरपुलिन्दकाम्बोजवङ्गा(ङ्ग)किरातबाह्ली(कर ? का)न्ध्रद्रविडवनादिषु प्रयुज्यते । अनियमाच्छ्रुतिमात्रमत्र ग्राह्यम् । यदा चतुःस्वरप्रयो(ग ? गो-ऽपि) स्वरान्तर(मह्रा ? माह) अवकृष्टध्रुवास्वेव वेदितव्यम् । (तमे[3] ?) ध्रुवं मध्ये[4] ये स्फुटीकरिष्यामः । तथाचाह भरतः—

"षट्स्वरस्य प्रयोगोऽस्ति तथा पञ्चस्वरस्य च ।
चतुःस्वरप्रयोगोऽपि ह्यवकृष्टध्रुवास्वपि ॥"

अपिशब्दादत्र संपूर्णोऽपि ग्राह्यः । एवं चतुर्विधः प्रयोगो ध्रुवाणां वेदितव्यः ।

इदानीमल्पत्वबहु(ते ? त्वे) ब्रवीमि । तत्र स्वराणामल्पशः प्रयोगादल्पत्वं, बहुशः प्रयोगाद् बहुत्वम् । तथाल्पत्वं बहुत्वं च द्विविधं सन्यासादिगतो भवेत् तदान्तरमार्गेणेति । अन्तरमार्गस्य लक्षणं यथा जातिषु क्वचिद्वा अनंशो विनाल्पः । तथाच कार्मारव्यां गान्धारस्य सर्वस्वरसङ्गत्या बहुत्वेनान्तरमार्गप्रयोग इति वक्ष्यते ।

गान्धारस्य विशेषेण सर्वतो गमनं भवेत् ।

---

१. 'रा' ख. पाठः. २. 'स्व' क. पाठः. ३. 'च', ४. 'ध्य' ख. पाठः.

इति । अथ बहुत्वमाह — अल्पवदत्र बहुत्वमिति । लक्षये-दिति विशेषः । कथमित्याह —बलवदबलवतोर्विपर्यासो ब-लमल्पं तद्विपर्यये बलवदिति बलवल्लक्षणं गम्यते एव । अत एवाह —

जातिस्वरैस्तु नित्यं (स्यात्) जात्यल्प(त्व ? त्वं) द्वि-
[(विधं ? धा) च तत् ॥ १९९ ॥

सञ्चा(रस्य ? रोंऽश) बलस्थानामल्पत्वं दुर्बलासु च ।
द्विविधान्तरमार्गैस्तु जातीनां व्यक्तिकार(कम् ? कः) ॥

इदानीं न्यासमाह—न्यस्यते त्यज्यते यस्मिन् येन वा गीतं तन्न्यास इति । स न्यासः स एकविंशतिसंख्य इति । तद्यथा षड्जाया एकषड्जो नाम न्यासः । एवमादि बोद्ध-व्यम् । अष्टादशजातिषु च न्यासाः । अंशः समाप्तौ कार्य इत्यर्थः ।

इदानीमपन्यासमाह— अपन्यासोऽन्ते प्रयोगसमाप्तौ अपन्यासः । सच षट्पञ्चाशद्भेदभिन्नो भवति गीतानां मध्ये बोद्धव्यः । यथा यत्र समाप्तमिव गीतं प्रतिभासते सोऽप-न्यासः । स च विदारीमध्ये भवति । गीतशरीरमध्यम इत्यर्थः यथा षड्जग्रामे षड्जमध्यायाः सप्तापन्यासा भव(ति ? न्ति) षड्जोदीच्यवायाश्च द्वौ पञ्चानां प्रत्येकं त्रयं त्रयमिति चतु-र्विंशतिः शेषास्तु मध्यमग्रामे । तथाचाह भरतः —

"न्यासो ह्यंशसमाप्तौ स चैकविंशतिविधो विधातव्यः ।
षट्पञ्चाशत्संख्यो भवेदपन्याससंज्ञोऽसौ ॥"

दशविधजातिलक्षणमिति ।

अंशाः स्युः पञ्च षड्जायां निषादर्षभवर्जिताः ।
अपन्यासस्तु गान्धा(रा? रः) पञ्चमश्चाथ स(ङ्गी ? ङ्ग)तिः ॥
षड्जगान्धारयोस्तु स्याद् षड्जधैवतयोस्तथा ।
षाडवं च निषादे स्यात् नास्यादौडुवितं भवेत् ॥ २०२ ॥
आर्षभ्यास्तु स्मृता अंशा निषादर्षभधैवताः ।
षड्जपञ्चमहीने च षाडवौरद्विते क्रमात् ॥ २०३ ॥
धैवत्यां गुरुभिः प्रोक्तावंशावृषभधैवतौ ।
समध्यमा (चवना ? वपन्या)सौ प्रागु(सा ? क्तौ) हीनतो-
[त्क्रमात् ॥ २०४ ॥
अंशो निषादवत्यास्तु द्विश्रुती सर्षभौ स्मृतौ ।
धैवतीवद् भवेच्छेषो न्यासो नामकृदेव तु ॥ २०५ ॥
अंशास्तु षड्जकैशि(क्यात् ? क्यां) षड्जगान्धारपञ्चमाः ।
सनिषादा अगान्धारा अपन्यासास्त एव तु ॥ २०६ ॥
ऋषभोऽल्पप्रयोगः स्यान्न्यासो गान्धार इष्यते ।
नित्यं पूर्णस्वरा चेयमाचार्यैः परिकीर्ति(ताः ? ता) ॥ २०७ ॥
स्यात् षड्जोदीच्यवत्यंशैः षड्जमध्यमधैवतैः ।
सनिषादैरपन्यासौ विज्ञेयौ षड्जधैवतौ ॥ २०८ ॥
ऋषभेण विहीने (यां ? यं) द्वाभ्यां द्वे पञ्चमेन च ।
मन्द्रगान्धारभूयस्त्वमपन्यासस्तु मध्य(मा ? मः) ॥ २०९ ॥
सर्वांशान्नामकृन्न्यासां विज्ञेया षड्जमध्यमा ।
स्यातां निषादगान्धारावस्यां गीतत्वकारिणौ ॥ २१० ॥

यथेष्टं स्यात्तु सञ्चारो यथा ग्रामाविरोधकृत् ।
षड्जग्रामे तु सप्तै(नाः ? ताः) शेषा मध्यमजातयः ॥२११॥
गान्धार्यां द्वावनंशौ च (गेआ ? ह्येया) वृषभधैवतौ ।
क्रमान्नित्यं त्वपन्यासौ विज्ञेयौ षड्जपञ्चमौ ॥ २१२ ॥
धैवताहृषभं गच्छेदे(व ? वं) स्यात् सर्वमेव तत् ।
प्रायशो रक्तगान्धार्यामपन्यासस्तु मध्य(मा ? मः)॥२१३॥
बहुप्रयोगः कर्तव्यो धैवतोऽथ निषादवान् ।
षड्(जं ? ज)गान्धारसञ्चा(र ? रः)का (यँ चा ? र्यश्चा) स्य ाः
[प्रयोक्तृभिः ॥ २१४ ॥
गान्धारोदीच्यवा प्रा(य ? यः) षड्जोदीच्यवतीसमा ।
षड्जश्च मध्यमश्चांशो न चौडुविभमिष्यते ॥ २१५ ॥
पञ्चांशा मध्यमायास्तु ज्ञेया द्विश्रुतिवर्जिताः ।
क्रमात् ताभ्यां च हीनत्वं बहुलौ षड्जमध्य(मौ) ॥
गान्धारोदीच्यवा (तुल्या मध्यमोदीच्यवा) भवेत् ।
साप्तस्वर्यं तु नित्यं स्यादन्यादंशस्तु पञ्चमः ॥ २१७ ॥
पञ्चम्यां गुरुभिः प्रोक्तावंशावृषभधैवतौ ।
समध्यमावपन्यासौ मध्यमर्षभसङ्गतिः ॥ २१८ ॥
षड्जमध्यमगान्धारा अल्पाश्च परिकीर्तिताः ।
स्यान्निषादाच्च गान्धारो अल्पस्य परिकीर्तिता ॥ २१९॥
स्यान्निषादाच्च + + + मध्यमा चञ्च हीनता (?) ।
ज्ञेयो गान्धारपञ्चम्याः पञ्चमोऽशः प्रयोक्तृभिः॥ २२०॥
सर्षभः स्यादपन्यासो (नासौ ? न्यासो) गान्धार इष्यते ।

गान्धा(र)मथ पञ्चम्या स्वरसञ्चारादि कीर्तितः ॥
तदस्यामपि विज्ञेयं किन्तु पूर्णस्वरा सदा ।
अन्ध्रयामनंशा विज्ञेयाः षड्जमध्यमधैवताः ॥
षाडवं षड्जहीनं स्यान्न्यासो गान्धार इष्यते ।
नन्दयन्त्यामपन्यासो ज्ञेयौ मध्यमपञ्चमौ ॥ २२३ ॥
ग्रहो न्यासश्च गान्धारः पञ्चमोऽशः प्रकीर्तितः ।
अन्ध्रीवत् षोडवं ज्ञेयमनोडुवितमेव च ॥ २२४॥
स्यान्म(न्द ? न्द्र)र्षभसञ्चारो लङ्घनीयश्च स क्वचित् ।
कार्मारव्यामनंशास्तु षड्जगान्धारमध्यमाः ॥ २२५ ॥
पूर्णता पञ्चमो न्यासो गान्धारगमनं बहु ।
कैशिक्यामृषभोऽनंशो न्यासौ तु द्विश्रुतौ + + ॥ २२६ ॥
ऋषभो धैवतश्चैव हेयावस्या यथाक्रमम् ।
पञ्चमोऽपि भ(व ? वे)न्या(सौ ? सो) निषादेंऽशेऽथ धैवते ॥
ऋषभः स्यादपन्यासः कैश्चिदुक्तोंऽशवत् तथा ।
अस्मद्गुरुमते ऋषभस्तावदपन्यासो भवति । अनंशत्वात् ।
कैश्चित् पुनः अंशवद् (वृ ? ऋ)षभोऽप्यपन्या(सवी ? सः-
[स्वी)कृ(तम् ? तः) ॥ २२८ ॥
पञ्चमो बलवा न स्यात् स्यान्निषादस्तथैव च ।
इति त्रिषष्टिरंशा ये तेषामेकैकशोंऽशताम् ॥ २२९ ॥
प्रकल्प्यापोद्यते प्राप्तषाडवोडुवितं क्वचित् ।
अषाडवा एते ।
त्रिषष्टिरंशा एतेषामंशो न जाति + + + + + + ॥ २३० ॥

अशवश्च ग्रहा ज्ञेया सर्वासामेव नित्यशः ।
सर्वासामेव जातीनां त्रि(षष्टि ? जाति)स्तु गणः स्मृतः ॥
लक्षणात् स च विज्ञेयो वर्धमानः स्वरो बुधैः ।
एकस्वरो द्विस्वरश्च त्रिस्वरश्च चतुःस्वरः ॥ २३२ ॥
पञ्चस्वरश्चतुर्धा च एकधा सप्त षट्स्वराः ।

अस्यार्थः — त्रिजातिको (गु ? ग)ण इति संख्या निदर्शनं तत्रैकस्वरांशास्तिस्रः मध्यमोदीच्यवा गान्धारपञ्चमी नन्दयन्ती चेति । पपप । द्विस्वरांशास्तिस्रः । धैवती गान्धारोदीच्यवा पञ्चमी चेति । धरि सम परि । त्रिस्वरांशास्तिस्रः आर्षभी नैषादी षड्जकैशिकी चेति । धनिसागरिससग(पः ? पाः) । चतुःस्वरांशास्तिस्रः । षड्जोदीच्यव(त्य ? त्या)न्ध्री कार्मारवी चेति । समधनि निगपनि । परिधनि । पञ्चस्वरांशाश्चतस्रः । षड्(ज ? जा)गान्धारी रक्तगान्धारी मध्यमा चेति । सगमपध । सगमपनि सरिगमपध । सरिमपध । षड्जस्वरांशा कैशिकी । समगपधनि । सप्तस्वरांशा षड्जमध्यमा । सरिगमपधनि । एवं त्रिषष्टिरंशा व्याख्याताः ।

मध्यमोदीच्यवा चैव तथा गान्धारपञ्चमी ॥ २३३ ॥
नन्दयन्ती च तिस्रस्ताः पञ्चमैकांशतः स्मृताः ।
धैवती पञ्चमी चैव ज्ञेये धरिद्विवांशके ॥ २३४ ॥
गान्धारोदीच्यवा द्वाभ्यां मध्य(म)र्षभ इत्यपि ।
आर्षभ्यां (तिरि ? निरि) धा अंशा नैषाद्यां निरिगास्त्रयः ॥
सग(लाः ? पाः) षड्जकैशिक्यां तिस्रस्त्र्यंशाः प्रकीर्तिताः ।

चतुरंशा समनिधैः षड्जोदीच्यवती स्मृता ॥ २३६ ॥
कार्मारवी रिपनिधैरान्ध्री (च?) गपानिपैरपि ।
सगमपधैः षाड्जी स्यात् पञ्चभिश्चापि मध्यमा ॥२३७॥
सरिमपधैरंशैः स्याद् गान्धारी सगमानिपैः ।
तद्वत् स्याद् रक्तगान्धारी पूर्वैरंशैश्च पञ्चभिः॥ २३८ ॥
कैशिक्येका षडंशा स्यात् सगमपनिधैः स्मृता ।
षड्जमध्यमा तु सप्तांशा त्रिषष्टिरिति तेंऽशकाः ॥ २३९॥
अंशकै(ग्रा ? ग्रा)मरागांस्तु जनयन्तीति जातयः ।
आसां प्रयोगकाले तु युग्मायुग्माश्रयो विधिः ॥ २४० ॥
मार्गैस्त्रिभिः प्रयोक्तव्याश्चित्रवार्तिकदक्षिणैः ।
पूर्वरङ्गे कृते शुद्धा कर्तव्यं गीतयोक्तृभिः ॥ २४१ ॥
आसारिकं वाणिकादि ततो वात्यंशकल्पनम् ।
स्वराणामङ्गहारैर्यत एवासारितक्रमैः ॥ २४२ ॥
वर्धमानपदे तासां कार्या स्यादंशकल्पना ।
इति त्रिषष्टिरंशा ये तेषामेकैकशोंऽशताम् ॥ २४३ ॥
प्रकल्प्यापोद्यते प्राप्तं षाड(वो ? वौ)डुवितं क्वचित् ।

इति त्रिषष्टिरंशा ये उक्तास्तेषां मध्ये ये अनंशास्तेषामनंशानां प्रत्येकमंशानां परिकल्प्य षाडवत्वमौडुवितत्वं प्राप्तं क्वचिदिति जातिविषये अपोद्यते । एतदेव स्फुटयति

अषाडबा निषादेंऽशे सनि स्यात् षड्जमध्यमा ॥ २४४ ॥
गान्धारे च यतो लोपो नांशसंवादिनो म(तं ? तः) ।

अस्यार्थः — निषादेंऽशे षड्जमध्या-जातिरषाडवा । कथम् । षड्जग्रामे षाडवविधौ गान्धारस्य लोपो नास्ति । गान्धारेंऽशे निषादेन अषाडवा बोद्धव्याः । अंश(सञ्चा ? संवा)-दिनो लोपाभावात् ।

कैशिकी रक्तगान्धारी गान्धारी चैव पञ्चमे ॥ २४५ ॥
तथा षाड्जा तु गान्धारे धैवता तदादीच्यवा ।

निश ऋषभेण षड्जोदीच्यवा .... शे अषाडवा विज्ञेया ।

इदानीमौडुबितं प्राप्तमपोद्यते —

गान्धारीरक्तगान्धार्योः षड्जमध्यमपञ्चमाः ॥ २४६ ॥
सनिषादाः स्मृता अंशा अनौडुबितभागिनः ।

एतच्चासङ्गतम् । औडुबितप्राप्तेरभावात् । सत्यमुक्तम् । औडुबितनिषेधवचनानि विधेश्चाप्राप्तमेवौडुबितत्वं निषिध्यते ।

षड्जमध्यमजातौ तु गान्धारोऽथ निषादवान् ॥ २४७ ॥
कैशिक्यामथ पञ्चम्यां क्रमा वृषभधैवतौ ।

गान्धारोऽथ निषादवानौडुबितभागी । कैशिक्यामृषभः पञ्चम्यां धैवतश्चानौडुबितभागी स्यात् । तत्र प्राप्तमेवानौडुबितत्वं निषिध्यते अंशता चाप्राप्तैव कल्प्यते ।

इदानीं ये अपवादीभूताः स्वराः षाडवौडुबितविधौ तानुदस्यति ।

योज्याः सप्ताधिकाश्चैव चत्वारिंशच्च षाडवे ॥ २४८ ॥

अस्यार्थः— षाडवे विधौ क्रियमाणे सप्ताधिकश्चैवं चत्वारिंशच्च पाडवे अस्यार्थविधौ क्रियमाणे सप्ताधिका-

श्चत्वारिंशदंशका अपवादस्वररहिता योजनीया इत्यर्थः। चतसृणां जातीनां नित्यसम्पूर्णानां नवांशाः पातनीयाः त्रिषष्टिमध्ये। तद्यथा—रिपधनिपसग। पध। एषु नवांशेषु पातितेषु चतुष्पञ्चाशदंशा वशिष्यन्ते। तत्रापि षड्जमध्यमा षड्जोदीच्यवा कैशिकी गान्धारी रक्तगान्धारी धैवती आसां षड्जातीनां सप्तांशाः पातनीयाः। तेषु सप्तांशेषु पातितेषु सप्तचत्वारिंशदंशा भवन्ति। तद्यथा—

मध्यमोदीच्यवायां वा तथा गान्धारपञ्चमी।
कार्मारवी रिपनिधैः सगपैः षड्जकैशिकी॥ २४९॥

सगमपधैः स्मृता + + + + + + + + + + ।
नन्दयन्ती भवेत् पागा गान्धारोदीच्यवासमा॥

तेषु चत्वारिंशदंशेषूक्तपरैः षाडवविधिः कर्तव्यः।

इदानीमौडुवितविधौ येषु अनपवादिनः स्वरास्तान् दर्शयति।

तथापवादनिर्मुक्तस्त्रिंशदौडुविते भवेत्॥ २५०॥

अस्यार्थः—तथा तेन प्रकारेण अपवादनिर्मुक्तस्त्रिंशत्प्रका(रं?रो) बोद्ध(व्यम्?व्यः)। तद्यथा— त्रिषष्टिमध्ये नित्यसंपूर्णानां चतसृणां जातीनां नवांशाः पातनीयाः। तेषु पातितेषु चतुष्पञ्चाशदंशास्तत्रावशिष्य(स्त?न्ते।) तत्रापि चतुष्पञ्चाशन्मध्ये चतसृणां जातीनां नित्यसंपूर्णषाडवानां द्वादश सप्तांशाः पातनीयाः। तेषु पातितेषु द्विचत्वारिंशदंशेषूक्तस्वरैरौडुवितविधिर्भवतीति। तथाचाह भरतः—

"षट्स्वरा सप्तमे त्वंशे नेष्यते षड्जमध्यमा ।
संवाद्यलोपाद् गान्धारे तद्वद् धैवतहीनता ॥
गान्धारीरक्तगान्धारीकैशिकीनां च पञ्चमः ।
षड्जायाश्चैव गान्धारमंशो मध्यमषाडवौ ॥
षाडवं धैवते नास्ति षड्जोदीच्यंशके द्विजाः ।
गान्धारीरक्तगान्धार्योः षड्जमध्यमपञ्चमाः ॥
सप्तमश्चैव विज्ञेयो यैः स्वनौडुवितं भवेत् ।
द्वौ षड्जमध्यमांशौ तु गान्धारः स निषादवान् ॥
ऋषभश्चैव पञ्चम्यां कैशिक्यां धैवतस्तथा ।
एवं च द्वादशैवैते व(र्गाः ? ज्योः) पञ्चस्वरे सदा ॥
सर्वस्वराणां नाशोऽत्र विहितः सर्वजातिषु ।
न मध्यमस्य लोपो हि कर्तव्यस्तु कदाचन ॥
सर्वस्वराणां प्रवर अनाशी मध्यमस्वरः ।
गान्धर्वकल्पो विहितः सामस्वपि च मध्यमः ॥"

इदानीं षाडवौडुवितविधिस्तु उत्सर्गापवादविधिस्तु विकृतास्वेव जातिषु बोद्धव्यः । ननु शुद्धासु जातिषु तासां शुद्धानामन्यजात्युत्पत्तौ मूलत्वाद् एता एव शुद्धा विकृता भवन्ति । कथं —

तद्ग्रहा तदपन्यासा तदंशा च यदा भवेत् ।
मन्द्रन्यासा च पूर्णा च शुद्धा जातिस्तथोच्यते ॥ २५१ ॥

इति शुद्धलक्षणमुक्तम् ।

एतेन लक्षणेनैकेन द्वाभ्यां वा विकृता भवन्ति। पुनर्न्यासवर्ज्यमिति। न्यासेन विकृतं च नास्ति न्यासवर्ज्यमिति वचनात्। विकृता षाड्जी(द्वि)विधा नित्यसम्पूर्णा षाडवा चेति। नामांशेन षाड्जी शुद्धविकृता षाड्जी गान्धारांशेन संपूर्णा अंशसंवाद्यलोपात्। मध्यमपञ्चमधैवतांशे निषादेन षाडबा यदा तु षाड्जी शुद्धा गीयते तदा पञ्चमस्यांशत्वेन शेषाणां स्वराणां बहुत्वम्। बहुत्वेन षड्जपञ्चमयोस्त्रिंशदंशा भवन्ति। षड्भिश्चतुर्दशविधो भवति। गान्धारश्चैकोनविंशतिविधः। मध्यमश्चतुर्दशविधः। मिलित्वा सप्तस्वरा अष्टाविंशत्यधिकं शतं भवतीत्यलम्॥

इदानीं दशलक्षणमध्ये यद्यस्यां जातौ भवति तत् तस्या दर्शयति। तत्र षाड्ज्याः षड्जग्रामसम्बन्धाया अंशा ग्रहाः पञ्च भवन्ति। तद्यथा षड्जगान्धारमध्यमपञ्चमधैवता (ग्रहाः अंशा ?) ग्रहा अंशाश्च। गान्धारपञ्चमावपन्या(सो ? सौ)। निषादहीना षाडबो षड्जो न्यासः। षड्जगान्धारयोः षड्जधैवतयोश्च सङ्गतिः। गान्धारोऽतिवेलापादित्वात् परस्परगमनं च सङ्गतिः। पञ्चस्वरपरा तारगतिः। षड्जस्वरात परा वा म(न्त्र ? न्द्र)गतिः। षड्जधैवतयोश्च औडुबितत्वं च सर्वथैव नास्ति। सम्पूर्णा षाडबा। यदा सम्पूर्णा गीयते तदा ऋषभपञ्चमयोर्निषादपञ्चमयोरल्पत्वं कार्यम्। कुतः —

यं विना हीनता यस्यां स्यात् चेत्तस्यां तु सोऽल्पकः।

इति वचनात्। य(था ? दा) षाडबा गीयते तदा ऋषभस्या-

ल्पत्वं कार्यम् । शेषाणां स्वराणां बहुत्वम् । अस्याश्च दशांशकाः । तद्यथा । शुद्धा विकृताश्च पञ्च पूर्णाश्चत्वारः षाडबाः गान्धारेंऽशे षाडबापवादात् तेनांशाः स्फुटयन्ते तेन लिखिताः षड्जांशेन शुद्धत्वं षड्जश्चापन्यासः संपूर्णावस्थायामष्टविधलक्षणम् । षाडबावस्थायां न(य ? व)विधत्वम् । शुद्धं परित्यज्य चतुर्विधा षाड्जी विकृता बोद्धव्या । अस्याश्च धैवतादिमूर्छना पञ्चपाणिश्चित्रे मार्गे मागधी गीतिः पञ्चपाणिर्द्विकलः वार्तिकमार्गे सम्भाविता गीतिश्चतुष्कलः पञ्चपाणिः दक्षिणे मार्गे पृथुला गीतिः । अनेन क्रमेण सर्वासां जातीनां बोद्धव्यम् । वीररौद्राद्भुता रसाः कार्याः । प्रथमोपक्षेपगे ध्रुवागाने विनियोगः ॥

आर्षभी शुद्धा गीयते । निषादपञ्चमाल्पत्वं ऋषभगान्धारमध्यमपञ्चमधैवतनिषादाः षड्जषड्जः मिलित्वा .... षभ्याम् । ऋषभधैवतनिषादा ग्रहाः स्वयमेवांशाः । त एवापन्यासाः । पञ्चस्वरपरस्तारः निषादः ऋषभो न्यासः न्यासपरस्तत्परो वामन्द्रः षड्जधैवतपञ्चमः ऋषभगान्धारयोश्च सङ्गतिः । षड्जहीनं षाडबम् । षड्जपञ्चमहीनम् औडुवितम् । पूर्णावस्थायां षड्जगान्धारपञ्चमानामल्पत्वम् । औडुवि गान्धारमध्यमयोरल्पत्वं शेषाणां च बहुत्वम् । दशविधत्वं चास्याः दशांशाः शुद्धविकृताः पूर्णास्त्रयः । पञ्चमादिमूर्छना चञ्चत्पुटस्तालः । एककलेन चित्रेण मागधी । द्विकलेन वार्तिकेन सम्भाविता । चतुष्कलेन दक्षिणेन पृथुला मात्रा ॥ ६९ ॥

दक्षिणे कला । वीररौद्राद्भुता रसाः । प्रथमप्रेक्षणके नैष्क्रामिकी ध्रु(वं ? वा)गाने विनियोगः । धैवतादिमूर्छना धैव(न्या ? त्या) धैवतं महौ ग्रहौ अंशौ च । शुद्धावस्थायां धैवत्येव न्यासः । विकृतावस्थायां च धैवतर्षभमध्यमा अपन्यासाः । धैवतो न्यासः । पञ्चमहीनं षाडवं पञ्चमषड्जहीनं षाडवं पञ्चमषड्जहीनमौडुबितम् । तावेव षड्जपञ्चमस्वरौ तु बलौ कर्त(व्य ? व्यौ ।) क्वचिल्लङ्घनीयौ । पञ्चस्वरपरस्तारः । न्यासपरस्तत्परो वा मन्द्रः । पूर्णावस्थायां षड्जगान्धारमध्यमपञ्चमनिषादानामल्पत्वं पञ्चमषड्जवर्जं च । एतेषामौ(डु)बिते अल्पत्वम् । शेषाणां च बहुत्वम् । विविधत्वमस्याः सप्तांशकाः शुद्धा विकृताः पूर्णा ऋषभादिमूर्छना तालः पञ्चपाणिः एककलश्चित्रो मार्गः मागधी गीतिः । द्विकलो (वा)र्तिकः सम्भाविता । चतुष्कलो दक्षिणः पृथुला कला (धतर ?)दक्षिणे कलाः द्वादश वार्तिके कला अष्टचत्वारिंशद् । रसा वीरबीभत्सभयानकाः । ध्रुवागाने प्रथमे प्रेक्षणके विनियोगः । निषादवत्या निषादर्षभगान्धारा ग्रहाः अं(शा)श्च । अपन्यासाश्च निषादगान्धारर्षभाः । निषाद एको न्यासः। पञ्चमहीनं षाडबं पञ्चमषड्जहीनमौडुबितम् । पूर्णावस्थायां षड्जगान्धारमध्यमपञ्चमानामल्पत्वम् । औडुबिते मध्यमधैवतयोरल्पत्वम् । पञ्चस्वरपरा तारगतिः । न्यास(प)रस्तत्परो वा मन्द्रः। गान्धारादिमूर्छना तालश्चचत्पुटः दक्षिणे कला चतुष्षष्टिः चित्रेऽष्टौ । दशविधत्वं चास्याः दशांशाः शुद्धास्त्रयो विकृताः पूर्णा । रसश्च करुणः । ध्रुवागाने प्रथमप्रेक्षणके विनियोगः ॥

षड्जकैशिक्या षड्जगान्धारपञ्चमा ग्रहाः अंशाश्च। पञ्चस्वरपरस्तारः। न्यासपरस्तत्परो वा मन्द्रः। नित्यसम्पूर्णा च। धैवतनिषादग्रहा। मध्यमानामल्पत्वम्। ऋषभस्याल्पतरत्वं शेषाणां बहुत्वम्। (ना ? न्या)सस्तु गा(मागा ? न्धा)रः षड्जनिषादपञ्चमाः अष्टैव अस्याः शुद्धत्वमंशकाः पूर्णाश्चच्चत्पुटस्तालः। एककले चित्रे मागधी गीतिः। द्विकले वार्तिके सम्भाविता। चतुष्कले दक्षिणे पृथुला। रसश्च करुणः। प्रथमप्रवेशगीते द्वितीयप्रेक्षणके विनियोगः। षड्जोदी(व्य ? च्य)वायाः षड्जमध्यमधैवतनिषादा ग्रहाः अंशाश्च। पञ्चस्वरपरस्तारः। न्यासपरस्तत्परो वा मन्द्रः। ऋषभहीनं षाडवं ऋषभपञ्चमहीनमौडुबितम्। पूर्णावस्थायाम्.... षड्जगान्धारपञ्चमयोरल्पत्वं गान्धारस्यांशत्वे प्राप्तौ बाहुल्यं षाडवे पञ्चमस्याल्पत्वं औडुबिते न कस्याप्यल्पत्वमशेषाणां बहुत्वं मध्यमो न्यासः। ऋषभधैवतावपन्यासौ। अंशानां परस्परगमनम्। दशविधत्वमस्याः सप्तांशक....तत्र सप्त पूर्णा पञ्च षाडवाः पञ्च औडुबगान्धारमूर्छनातालः पञ्चपाणिः। एककलेन चित्रेण मागधी। द्विकलेन वार्तिकेन सम्भाविता। चतुष्कलेन दक्षिणेन पृथुला। रसौ शृङ्गारहास्यौ। ध्रुवागाने द्वितीयप्रेक्षणके विनियोगः। षड्जमध्यमाया ग्रहाः अंशाश्च सप्तैव स्वराः। पञ्चस्वरपरस्तारः। न्यासपरस्तत्परो वा मन्द्रः। निषादहीना षाडवा। निषादगान्धारहीना औडुबिता। ग्रामाविरोधेन यथेष्टं सञ्चारः। पूर्णावस्थायां निषादगान्धारयोरल्पत्वम्। षड्जमध्यमौ न्यासौ। सप्तस्वरापन्या(सः ? सा)

दशविधत्वम् अस्या एतदंशकाश्चत्वारः षाडबाः। तथैव धैव-तेंऽशो षाडबानाम् औडुविताश्च शुद्धत्वं नास्ति। मध्यमादिमूर्छना तालः पञ्चपाणिः एककलेन चित्रेण मागधी द्विकले(न) वार्तिकेन सम्भाविता चतुष्कलेन दक्षिणेन पृथुला सर्वरसात्मिका ध्रुवागाने द्वितीये प्रेक्षणके विनियोगः। एताः षड्जग्रामसंबन्धाः सप्त जातयः। इदानीं मध्यग्रामसंबन्धा जातय उच्यन्ते। तत्र गान्धार्यां गान्धारषड्जमध्यमपञ्चमनिषादा ग्रहाः त एवांशाः। पञ्चस्वरपरस्तारः न्यासपरस्तत्परो वा मन्द्रः। ऋषभहीनं षाडबम्, ऋषभधैवतहीनमौडुबितम्। पूर्णावस्थायामृषभधैवतयोरल्पत्वं शेषाणां बहुत्वम्। स्वरजातित्वाद् गान्धारो न्यासः षड्जमध्यमावपन्यासौ धैवतर्षभयोः सङ्गतिः। तद्यथा — गान्धारी यदा संपूर्णा गीयते तदा माधारिगा इति गायन्ति इति प्रयो(गि ? गः) स्यात्। यदा ऋ(ष)भहीना गीयते धरस्वरप्रवेशनं(?) माधाधागा इति प्रयोगः स्यात्। यदा औडुबिता गीयन्ते तदा उत्तर(स्वर?) स्वरप्रवेशे मागागा इति प्रयोगः स्यात्, मापरिध इति प्रयोगः कदाचिदपि न स्यात्। दशविधत्वमस्याः एकादशांशकाः शुद्धा विकृताः पूर्णाः पञ्च चत्वारः षाडबाः औडुबित एकः मूर्छना धैवतादिः चञ्चत्पुटस्तालः एककलविधः चित्रमार्गे मागधी द्विकले वार्त्तिके सम्भाविता चतुष्कले दक्षिणे पृथुला रसः करुणः मात्रा दक्षिणे वार्तिके चित्रे कला ध्रुवागाने तृतीयप्रेक्षणके विनियोगः।

रक्तगान्धा(र्यष्व ? र्योष)ड्जमध्यमपञ्चमगान्धारनिषादा ग्रहा अंशाश्च। पञ्चस्वरपरस्तारः न्यासपरस्तत्परो

वा मन्द्रः। ऋषभहीनं षाडवम् ऋषभधैवतहीनमौडुवितम्। पूर्णावस्थायामृषभधैवतयोरल्पत्वं शेषाणां बाहुल्यम्। निषादस्यांशत्वादबहुत्वे प्राप्ते वचनादबहुत्वं (?), धैवतस्यानंशत्वादल्पत्वे प्राप्ते वचनाद् बाहुल्यं, षाडवे धैवतस्याबाहुल्यम्। ऋषभस्य न कदाचिदपि। औडुविते सर्वेषामंशत्वान्न तस्याल्प(श ? )त्वम्। उक्तभङ्ग्या शेषाणां बाहुल्यम्। न्यासो गान्धार एव च। अपन्यासस्तु मध्यम एव। षड्जगान्धारयोस्तु सञ्चारः दशविधत्वमस्याः द्वादशांशक्रमः पूर्णाः पञ्च चत्वारः षाडवे पञ्चप्यंशेऽपवाद(?)। ऋषभादि मूर्छना। करुणो रसः। तालः पञ्चपाणिः। एककले चित्रे मागधी। द्विकले वार्तिके सम्भाविता* ।

(षट् ? अंशाः)सप्त स्वराः षड्जमध्यमाया मिथश्च ते ॥

सङ्गच्छन्ते निरल्पोंऽशा(गा?ङ्गा)दृते वा(नि ? दि)तां विना।
निलोपे नीगलोपे च षाडवौडुविते मते ॥ २५३ ॥

षाडवौडुवयोः स्यातां द्विश्रुती तु विरोधिनौ ।
गीतितालकलादीनि षाड्जीवन्मूर्छना पुनः ॥ २५४ ॥

मध्यमादिरिह ज्ञेया पूर्ववद् विनियोजनम् ।

अस्यां षड्जमध्यमौ न्यासौ। सप्त स्वरा अपन्यासाः। प्रस्तारः — मागासगप(धप) मानिधनिमा (१)। मामासरी गरिनि(ध)पधापा (२)। मागारीगा मामासासा (३)। धागधपरिरिगिगरिगिसधसधा। रिगरिगसासा। सासारिगरिग (५) (?)।

* इतः परमादर्शे ४ पत्राणि लुप्तानि।

निषधरीमम मामामामा (६) । मांमांमगमम पपधपनिमग (७) । धापधपरिगम गारिगस+सग (८) । मामाधनिधस धपपमपापा (९) । मामगमामा पधपमगमगस (१०) । धागधपरिरिगिगरिगसधस (११) । निधसरिमगममामामामा । षड्जमध्यमा । स ॥

गान्धारोदीच्यवायां तु द्वावंशौ षड्जमध्यमौ ॥ २५५ ॥
रिलोपात् षाडवं ज्ञेयं पूर्णत्वेऽ(शोन्तरात्मना ? शेतराल्पता)।
अल्पा निधपगान्धाराः षाडवत्वे प्रकीर्तिताः ॥ २५६ ॥
रिधयोः स(गनिज्ञे ? ङ्गतिर्ज्ञे)या धैवतादिश्च मूर्छना ।
तालश्चच्चत्पुटो ज्ञेयः कलाः षोडश कीर्तिताः॥ २५७ ॥
विनियोगो ध्रुवागाने चतुर्थप्रेक्षणे मतः ।

अस्यां म(ध्य)मो न्यासः । षड्जधैवतावपन्यासौ । प्रस्तारः — सासापामा पाधपमामा (१) । धापामामा सासासासा (२) । धानीसासा मामापापा (३) । नीनीनीनी नी·नीनीनी (४) । मामाधानिस नीनीनीनी (५) । मापामापरि गागासासा (६) । गागमपापध माधनिपापा (७) । रिगसासाध नीनीधाधा (८) । (गारिगसासनि) गारिगसासा (९) । सासासामा मनिधनीनीनी (१०) । धामा पापापरि गागासासा (११) । गासागासा मापामापरिगा (१२) । गागागागा गागासासा (१३) । नीनिपाधा नीगागागा (१४) । नीनीधापा धापामापा (१५) । धापामामा मामामामा (१६) । गान्धारोदीच्यवती । म ॥

अंशाः स्यू रक्तगान्धार्यां पञ्च (म?ध)र्षभ(पूजि?वर्जि)ताः ॥

रीमतिक्रम्य सगयोः कार्ये सन्निधिमेलने ।
रिलोपरिधलोपाभ्यां षाडबौडुबमिष्यते॥ २५९ ॥

बहुत्वं निधयोरंशः पञ्चमो द्वेष्टि षाडबम् ।
द्विष(ज्जौ?न्त्यौ)डुबितं षड्जनिमपाः सङ्गतौ सगौ॥

पञ्चपाण्यादि षाड्जीवदृषभादिस्तु मूर्छना ।
तृतीयप्रेक्षणगतं ध्रुवायां विनियोजनम्॥ २६१ ॥

(तस्या?) तस्या गान्धारो (न्यासः, मध्यमोऽ)पन्यासः। प्रस्तारः— पानीसासा गासापानी (१) । सांसांपापा मामागागा (२)। मापाधापा मापाधप(म)ग-(३) । मामामामा मामामामा (४)। धानीपापधधानीपापा (५) । मां पा मां पा पापापामा (६) । रीगांमांपा पापामापा (७) । रीगामापा पापामापा (८) । पापापापा पापापापा (९) । रीगांधाधा रीगागागा (१०) । गापापाधं धानिधपापा (११) । मापरिमागा गागागागा (१२) । रक्तगान्धारी ॥

कैशिक्यामृषभान्यांशा निधावंशौ (प?य)दा तदा ।
न्यासः पञ्चम एव स्यादन्यदा(वि?द्वि)श्रुती मतौ ॥

अन्ये तु निगपन्यासा(न्) निधयोरंशयोर्विदुः ।
रिलोपरिधलोपेन षाडबौडुबितं मतम् ॥ २६३ ॥

रिरल्पो निपबाहुल्यमंशानां सङ्गतिर्मिथः ।
षाडबौडुबिते (द्द?द्वि)ष्टः क्रमात् पञ्चमधैवतौ ॥ २६४ ॥

षाड्जीवत् पञ्चपाण्यादि गान्धारादिस्तु मूर्छना ।
पञ्चम(प्रो ? प्रे)क्षणगतं ध्रुवायां विनियोजनम् ॥ २६५ ॥

अस्या (गान्धा)रपञ्चमनिषादा न्यासाः रिवर्जाः षट् सप्त वा स्वरा अपन्यासाः । प्रस्तारः —— पाधनिपाधनि गागागागा (१) । पापामाधनि निधपापापा (२) । धानीसासा रींरींरींरीं (३) । सांसांसांरीं गामामामा (४) । माधानीधा (मा)धामापा (५) । निगरीसाधनि रीरीरीरी (६) । गांरींसांसां पाधामामा (७) । गागागामा मानीधनीनी (८) । गागानीनी गागागागा (९) । गागानीनी धापापापा (१०) । मापामापा पापामामा (११) । धामागानिधानीनीगागा (१२) । कैशिकी । म ॥

पञ्च (माः ? मां)शा (सादना ? सदा)पूर्णा मध्यमोदीच्यवा [भता ।
लक्ष्म शेषं विजानीयाद् गान्धारोदीच्यवागत(म्) ॥२६६॥
मध्यमादि(र्मरीन ? र्मूर्छना) स्यात् तालश्चच्चत्पुटो मतः ।
चतुर्थस्य प्रेक्षणके ध्रुवायां विनियोजनम् ॥ २६७ ॥

अस्या मध्यमो न्यासः । षड्जधैवतावपन्यासौ । प्रस्तारः —— पाधनिनीनी मामानीपा (१) । रीरीरीगा सारिगगागा (२) । नीनीनीनी (नीनीनीनी) (३) । नीनिधपमा निधनिधपापा (४) । पापारीरी रीरीरीरी (५) । मारिगसासध नीनीनीनी (६) । सापानीमा पापागांगां (७) । गापामानि धानीनीसासा (८) । पापामाधनि पापापा (९) । मापामारिग गागागागा (१०) । गापामापा । नीनीनीनी (११) । मापामापरि गागागागा (१२) । गागागामा

मानिधनीनी (१३) । नीनीधपमा निधनिधपापा (१४) । रींगांसांगां मानिधनीनी (१५) । नीनीधापा धापामामा (१६) । मध्यमोदीच्यवा । म ॥

कार्मारव्यां भवन्त्यंशा निषादरिपधैवताः ।
बहवोऽन्तरभागत्वादनंशाः परिकीर्तिताः ॥ २६८ ॥
गान्धारोऽत्यन्तबहुलः सर्वांशस्वं (?) स्वसङ्गतैः ।
चच्चत्पुटः षोडशात्र कलाः षड्(जा)दि मूर्छनाः ॥ २६९ ॥
पञ्चमस्य प्रेक्षणस्य ध्रुवायां विनियोजनम् ।

अस्यां पञ्चमो न्यासः, अंशा ए(व ? वा) पन्यासः । प्रस्तारः — रीरीरीरीरीरीरीरी (१) । मां गां सां गां सा नीनीनीनी (२) । नीमानीमा पा(पागागा) (३) । गापामापा नीनीनीनी (४) । रींगांसानी रींगांरींगां (५) । रीगारीसा निधनीपापा (६) । मापामापरि गागागागा (७) । रींरींगांसम मामापापा (८) । मापामापरि गागागागा (९) । धानीपामा धानीसामा (१०) । नीनीनीनी नीनीनीनी (११) । मामाधानी नीधापापा (१२) । मापामापरि गागागागा (१३) । नीनीपाधनि गागागागा (१४) । सारीमासा नीनीनीनी (१५) । नीनीधापा पापापापा (१६) । कार्मारवी । म ॥

अंशो गान्धारपञ्चम्यां पञ्चमः स(ङ्ग)तिः पुनः ॥२७०॥
कर्तव्यात्रापि गान्धारीपञ्चम्योरिव सूरिभिः ।
चच्चत्पुटः षोडशात्र कला गादिश्च मूर्छना ॥ २७१ ॥
तुर्यप्रेक्षणसंबन्धि ध्रुवागाने नियोजनम् ।

अस्यां गान्धारो न्यासः । ऋषभपञ्चमावपन्यासौ । प्रस्तारः — पामपमधन धपमाधानी (१) । सनिधापापा पापापापा (२) । धानीसासा मामापापा (३) । नीनीनीनी नीनीनीनी (४) । नीनीधपमा निधनिधपापा (५) । पापारीरी रीरीपापा (६) । मारिगसासध नीनीनीनी (७) । नीरीसारिस रीरीरीरी (८) । नीगासानिग सानीनीनी (९) । नीमां नीमां पापागांगां (१०) । गांपामांपा नीनीनीनी (११) । मापामापरि गागागागा (१२) । नीनीपाधा नीगांगांगां (१३) । नीनीनीनी नीनीनीनी (१४) । मांमांधानी सनिधपापा (१५) । मांपांमांपरि । गांगांगांगां (१६) । गान्धारपञ्चमी ॥

अन्ध्रया (मङ्गा ? मंशा) निरगपा रिगयोर्निधयोस्तथा ॥

सङ्गतिर्न्यासपर्यन्तमंशानुक्रमतो व्रजेत् ।
षाडवं षड्जलोपेन मध्यमादिश्च मूर्छना ॥ २७२ ॥

पूर्वावत् तु कलातालाविनियोगाः प्रकीर्तिताः ।

अस्यामन्ध्रयां गान्धारो न्यासः । अंशा एवापन्यासाः । प्रस्तारः — गारीरीरी रीरीरीरी (१) । रीगारीगा रीरीरीरी (२) । रीरीगागा रीरीभामा (३) । रीगासाधनि नींनींनींनीं (४) । नींरींनींरी धनिधनिपापा (५) । मापामारिग गागागागा (६) । रीरीगासम मामा पापा (७) । मापामारिग गागागागा (८) । धानीगागा गागागागा (९) । पापामारिग गागागागा (१०) । नीनीनीनी रीरीरीरी

(११) । रीरीमानी सासानीनी (१२) । पपामागरि गागा-गागा (१३) । रीरीगासम मामापापा (१४) । मामानीनी सारीगापा (१५) । रिगगागागा गागागागा (१६) । अन्ध्री । म ॥

नन्दयन्त्यां पञ्चमोंऽशो गान्धारस्तु ग्रहः स्मृतः ॥२७४॥
कैश्चित्तु पञ्चमः प्रोक्तो ग्रहोऽस्यां गीतवेदिभिः ।
(मन्द्र)र्षभस्य बाहुल्यं षाडवं षड्जलोपतः ॥ २७५ ॥
हृष्यना मूर्छना तालः पूर्ववद् द्विगुणाः कलाः ।
विनियोगो ध्रुवागाने प्रथमप्रेक्षणे भवेत् ॥ २७६ ॥

अस्यां गान्धारो न्यासः । मध्यमपञ्चमावपन्यासौ । प्रस्तारः — गागागागा पापाधपम (१) । धाधाधाधा धनीसनिधा (२) । पापापापा पापापा (३) । धानीमापा गांगांगांगां (४) । मारीगागा गागागागा (५) । मापामापा धाधनिपापा (६) । धानीमापा गागागागा (७) । मपापापा मामागागा (८) । धानीमापा गागागागा (९) । मामामामा मामामामा (१०) रीगामापा पामपापानी (११) । रीरीरीरी पापामामा (१२) । धानीसनिधा पापापापा (१३) । धानीमापा गागागागा (१४) । गापापापा धामागामा (१५) । धाधानिधा पापापापा (१६) । रीगामापा पमपापाम (१७) । रीरीरीरी पापापापा (१८) । पापापापा धामामामा (१९) । निपागागम गांगांगांगां (२०) । रींरींगागा मामामामा (२१) । नीपानीमा नीधापापा (२२) । सासाधनिधा पापापापा (२३) । मापा(मा)पा (रिग) गागासांसां (२४) ।

रीरीगागा मामापामा (२५) । रींरींरींगा मारिगमा (मा) (२६) । मानीपानी गागागागा (२७) । मामापापा धाधनिनिधमा (२८) । धाधासानी धानीपापा (२९) । रींरींरींरीं मापाधामा (३०) । नीनीनीनी धापामामा (३१) । मापरिगागागागागागा (३२) । नन्दयन्ती । म ॥

भं ज्योतिस्तद्रतो हंसस्तस्मात् तं भरतं विदुः ।
तद्व(वं) भरतज्ञानं तद्भवा भारती शुभा ॥ २७७ ॥
किमुच्यते रागशब्देन किं वा रागस्य लक्षणम् ।
व्युत्पत्तिलक्षणं तस्य यथावद् वक्तुमर्हसि ॥ २७८ ॥

मतङ्ग उवाच —

रागमार्गस्य यद् रूपं यन्नोक्तं भरतादिभिः ।
निरूप्यते तदस्माभिर्लक्ष्य(ते ? ल)क्षणसंयुतम् ॥ २७९ ॥

तत्रादौ

स्वरवर्णविशेषेण ध्वनिभेदेन वा पुनः ।
रज्यते येन यः कश्चित् स रागः संमतः सताम् ॥ २८० ॥

अथवा

योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स च राग उदाहृतः ॥ २८१ ॥
सामान्यं च विशेषश्च लक्षणं द्विविधं मतम् ।
चतुर्विधं तु सामान्यं विशेषश्चांशकादिकम् ॥ २८२ ॥
इत्येवं रागशब्दस्य व्युत्पत्तिरभिधीयते ।
रञ्जनाज्जायते रागो व्युत्पत्तिः समुदाहृता ॥ २८३ ॥

अश्वकर्णादिवद् रूढो यौगिको वापि वाचकः ।
योगरूढोऽथवा रागो ज्ञेयः पङ्कजशब्दवत् ॥ २८४ ॥
इदानीं सम्प्रवक्ष्यामि सप्त गी(ति ? ती)र्मनोहराः ।
प्रथमा शुद्धगी(त ? तिः) स्याद् द्वितीया भिन्नका भवेत् ॥
तृतीया गौडिका चैव रागगीतिश्चतुर्थिका ।
साधारणी तु विज्ञेया गी(त ? ति)ज्ञैः पञ्चमी तथा ॥
भाषागीतिस्तु षष्ठी स्याद् विभाषा चैव सप्तमी ।
सप्तगीत्यो मया प्रोक्ता इदानीं भेद उच्यते ॥ २८७ ॥
गीतयः पञ्च विज्ञेयाः शुद्धा भिन्नाथ वेसरा ।
गौडा साधारिता प्रोक्ता याष्टिकेन महात्मना ॥ २८८ ॥

इति तेषां लक्षणमुच्यते दुर्गशक्तिमतम् ।

"प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी ।
सम्भाविता तृतीया च चतुर्थी पृथुला स्मृता ॥"

इति भरतमते ।

भाषा चैव विभाषा च तथा चान्तरभाषिका ।
तिस्रस्तु गीतयः प्रोक्ता याष्टिकेन महात्मना ॥ २८९ ॥
भाषागीतिर्विभाषा च मतङ्गेनाप्युदाहृता ।
भाषागीतिस्तथैकैव शार्दूलमतसम्मता ॥ २९० ॥
इदानीं संप्रक्ष्यामि रागलक्षणमुत्तमम् ।
मन्द्रा मन्द्रैश्च तारैश्च ऋजुभिर्ललितैः समैः ॥ २९१ ॥
स्वरैश्च श्रुतिभिः पूर्णा चोक्षा गीतिरुदाहृता ।
सूक्ष्मैश्च प्रचलैर्वक्रैरुल्लासीत (?) प्रसारितैः ॥ २९२ ॥

ललितैस्तारमन्द्रैश्च भिन्ना गीतिरुदाहृता ।
ओहाललललितैश्चापि त्रयो गौडाश्च (भो ? शो)भनाः ॥
हकारोकारयो(र्या ? र्गो)गादोहाली परिकीर्तिता ।
चिबुकं हृदये न्यस्य ओहाडी मन्द्रजा भवेत् ॥ २९४ ॥
द्रुता द्रुततरा कार्या सह कम्पेन पीडिता ।
ओहाडी ललिता चापि दृष्टादृष्टेन पाणिना ॥ २९५ ॥
त्रिस्थानकरणैर्युक्ता स्वस्थानचलनाकुला ।
चतुर्विधा तथोहाडी कर्तव्या गेयवेदिभिः ॥ २९६ ॥
समाक्षरा समा चैव कार्यारो(गा ? हा)वरोहिणी ।
अविश्रामेण त्रिस्थाने गौडी गीतिरुदाहृता ॥ २९७ ॥
प्रयोगैश्च द्रुतैः कार्या मिश्रामिश्रैश्च मालवैः ।
ईषत्प्रकम्पितैः किञ्चिद्दलितैस्तारदीपितैः ॥ २९८ ॥
सोच्छ्रासैः खण्डखण्डैश्च भिन्ना गीतिरुदाहृता ।
+ + + + + + + + + ओहाडी परिगीयते ॥ २९९ ॥
ललितैर्गमकैश्चित्रैः प्रसन्नैरौरसैः समैः ।
रञ्जकैः सुरसन्दर्भैं रागगीतिरुदाहृता ॥ ३०० ॥
चतुर्णामपि वर्णानां यो रागः शोभनो भवेत् ।
स सर्वो दृश्यते येषु तेन रागा इति स्मृताः ॥ ३०१ ॥
ऋजुभिर्ललितैः किञ्चित् सूक्ष्मासूक्ष्मैश्च सुश्रवैः ।
ईषद्द्रुतैश्च कर्तव्या मृदुभिर्ललितैस्तथा ॥ ३०२ ॥
प्रयोगैर्मसृणैः सूक्ष्मैः काकुमिश्रैः सुयोजितैः ।
(सु ? स्व)रैः साधारणा गीतिर्गीतिज्ञैः समुदाहृता ॥ ३०३ ॥

एवं साधारणा ज्ञेया सर्वगीतिसमाश्रया ।
प्रयोगैर्गात्रजैः श्लक्ष्णैः काकुरक्तैः सुयोजितैः ॥ ३०४ ॥
कम्पितैः कोमलैर्दीप्तैर्मालवी काकुनान्वितैः ।
ललितैः सुकुमारैश्च प्रयोगैश्च सु(सीं ? सं)यतैः ॥ ३०५ ॥
भाषागीतिः समाख्याता एषा गीतिविचक्षणैः ।
यथा वै रज्यते लोकस्तथा वै संप्रयुज्यते ॥ ३०६ ॥
ललितैर्बहुभिर्दीप्तैः कम्पितै(र ? रै)रसैः समैः ।
तारातितारैर्मसृणैर्मध्ये मध्यमदीपितैः ॥ ३०७ ॥
गमकैः श्रोत्रसुखदैर्ललितैस्तु यदृच्छया ।
विभाषागीतिस्तु संयोज्या यथा लोकोऽनुरज्यते ॥ ३०८ ॥
गीतानां लक्षणं प्रोक्तं रागसंख्योच्यतेऽधुना ।
पञ्च चोक्षाः समाख्यातास्तत्प्रमाणाश्च भिन्नकाः ॥ ३०९ ॥
गौडास्त्रयस्तु कथिता रागाश्चाष्टौ प्रकीर्तिताः ।
सप्त साधारणाः प्रोक्ता भाषाश्चैवात्र षोडश ॥ ३१० ॥
द्वादशैव विभाषाः स्युर्नामानि च निबोध मे ।
षाडबः पञ्चमश्चैव तथा कैशिकमध्यमः ॥ ३११ ॥
चोक्षसाधारितश्चैव चोक्षकैशिक इत्यपि ।
एते चोक्षास्तु विज्ञेया भिन्नकान् साम्प्रतं शृणु ॥ ३१२ ॥
भिन्नषड्जश्च तानश्च भिन्नकैशिकमध्यमः ।
भिन्नपञ्चम इत्युक्तस्त्रयो गौडाः प्रकीर्तिताः ॥ ३१३ ॥
टकुरागश्च सौवीरस्तथा मालवपञ्चमः
षाडबो बोट्टरागश्च तथा हिन्दोलकः परः ॥ ३१४ ॥

टक्कैशिक इत्युक्तस्तथा मालवकैशिकः ।
एते रागाः समाख्याता नामतो मुनिपुङ्गवैः ॥ ३१५ ॥
(गर्तः) शकाख्यः ककुभस्तथा हर्म्मीणपञ्चमः ।
रूपसाधारितश्चैव तथा गान्धारपञ्चमः ॥ ३१६ ॥
षड्जकैशिकसंज्ञश्च सप्त साधारणाः स्मृताः ।

इदानीं शुद्धानां लक्षणमाह —

निरपेक्षान्यजातीयैं स्वजा (?) स्वजातिमनुवर्तकाः ॥ ३१७॥
स्वजात्यन्यतमाश्चैव ते शुद्धाः परिकीर्तिताः ।

तत्र षाडव इति कस्मात् । किं षड्भिः स्वरैर्गीयत इति षाडवः, यद्वा षट्सु रागेषु मुख्य इति षाडवः । तत्र नाथमाद्यः पक्षः । कुतः । सम्पूर्णत्वादमुष्य रागस्य । तस्मादुत्तरपक्ष एव ज्यायान् । ननु (कथनुकथन ? कथं) न षट्सु रागेषु मुख्योऽयमुच्यते । पुर्वं शुद्धषाडवः प्रयोक्तव्य इति वचनात् । पूर्वरङ्गे प्रचुरप्रयोगत्वादस्य शुद्धषाडवस्यादौ निर्देशः ।

विकारमध्यमाजातेः संभूतः शुद्धषाडवः ॥ ३१८ ॥
(गर्तः शकाख्यः ककुभस्तथा हर्म्मी(लव ?)णपञ्चमः ॥
रूपसाधारितश्चैव तथा गान्धारपञ्चमः ।
षड्जकैशिकसंज्ञाश्च + + + + + + + + ?) ॥
न्यासोऽस्य मध्यमांशश्च गान्धारेण च (तु ? दु)र्बलः ।

अस्यार्थः—शुद्धषाडवो मध्यमग्रामसंबन्धः । तारमध्यमो ग्रहः । मध्यमोंऽशो न्यासश्च । गान्धारस्य चाल्पत्वम् । निषादगान्धारौ चात्र का(कल्य)न्तरौ । पूर्णस्वरश्चायम् । पूर्वर(ङ्ग?ङ्गेऽ)स्य

प्रयोगः। मध्यमो वादी। षड्जः संवादी। ऋषभपञ्चमावनुवादिनौ। विवादी नास्ति। शृङ्गारहास्यौ रसौ। मध्यमादिमूर्छना। अवरोही वर्णः। प्रसन्नान्तोऽलङ्कारः। त्रिषु मार्गेषु गीयते। दक्षिणे कला वृत्तौ कला चित्रे कला। स्वरपदेषु चच्चत्पुटादितालः। आक्षिप्तका। शुद्धपञ्च(मा? म): षड्जोदीच्यवतीजातिः स्मृतः।

षड्जांशो मध्यमन्यासः स्वल्प(वि? द्वि)श्रुतिकस्वरः॥
स्यात् षड्जमध्यमाजातेः शुद्धः साधारितस्तथा।

अस्यार्थः—शुद्धसाधारितो रागः षड्जग्रामसंबन्धः। षड्जमध्यमजातेरुत्पन्नत्वात्। तारषड्जो ग्रहोंऽशश्च। मध्यमो न्यासश्च। निषादगान्धारयोरल्पत्वम्। पूर्णश्चायम्। गर्भसन्धौ विनियोगः। वीररौद्रादिको रसः। षड्जा(ति? दि)-मूर्च्छना। अवरोही वर्णः। प्रसन्नान्तोऽलङ्कारः। दक्षिणे कला वृत्तौ कला चित्रे कला। स्वरपदगीते चच्चत्पुटादितालः।

कैशिकीषड्जमध्याभ्यां शुद्धकैशिकमध्यमः॥ ३२०॥
षड्जांशो मध्यमन्यासस्त्यक्त(त्रि? त्रि)श्रुतिपञ्चमः।

अस्यार्थः— शुद्धकैशिकमध्यमो रागः षड्जग्रामसम्बन्धः। कैशिकीषड्जमध्यमाजात्योः समुत्पन्नत्वात्। (ननु?) कैशिकी मध्यमग्रामसम्बद्धा, षड्जमध्यमा षड्जग्रामसम्बन्धा, अत उभयग्रामतास्तीति भावः। तारषड्जोऽस्य ग्रहोंऽशश्च। मध्यमो न्यासः। निषादगान्धारयोरल्पत्वम्। पञ्चमर्षभयोर्लोपः। निषादोऽत्र काकलिषाडवश्च। निर्वहणे चास्य प्रयोगः। षड्जादिमूर्छना। रौद्रवीरादिको रसः। प्रसन्नान्तोऽलङ्कारः।

षड्जांशैः पञ्चमो न्यासः कैशिकीजातिसम्भवः ॥ ३२१ ॥
तथा कार्मारवीजातेः स्वरैः पूर्णैश्च कैशिकः ।

अस्यार्थः—शुद्धकैशिको नाम मध्यमग्रामसम्बन्धः। कैशिकीकार्मारवीजात्योः समुत्पन्नत्वात्। तारषड्जोऽस्य ग्रहः अंश(स्व?श्च)। पञ्चमो न्यासः। निषादोऽत्र काकली। पूर्णस्वरश्चायम्। चित्रस्याष्टादशाङ्गस्य निर्वहणे विनियोगः। वीररौद्रादिको रसः। षड्जादिमूर्छना। आरोही वर्णः। प्रसन्नादिरलङ्कारः। दक्षिणे कला वृत्तौ कला चित्रे कला। स्वरपदगीते चञ्चत्पुटादितालः। ननु एते ग्रामविशेषसम्बन्धाः। कु(तोऽ) यं विशेषलाभः। उच्यते। भरतवचनादेवासौ विशेषो लभ्यते। तथाचाह भरतमुनिः— "जातिसम्भूतत्वाद् ग्रामरागाणामि"ति। यत् किञ्चिदेतद् गीयते लोके तत् सर्वजातिषु स्थितमिति वचनात्। तथा काश्यपेनाप्युक्तं—

"षाडवे मध्यमग्रामे पञ्चमः ककुभस्तथा।
षड्जे साधारितश्चैव तथा कैशिकमध्यमः ॥"

ननु अ(यं ? मी) विनियोगविशेषाः कस्माल्लभ्यन्ते। वचनादेव लभ्यन्ते। तथाचाह भरतः—

"मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे भवेत्।
गर्भे साधारितश्चैवावमर्शे + तु पञ्चमः ॥
संहारे कैशिकः प्रोक्तः पूर्वरङ्गे तु षाडवः।
चित्रस्याष्टादशाङ्गस्य त्वन्ते कैशिकमध्यमः ॥
शुद्धानां विनियोगोऽयं ब्रह्मणा समुदाहृतः।"

इदानीं भिन्नानां लक्षणमाह—

श्रुतिभिन्नो जातिभिन्नः शुद्धभिन्नः स्वरैस्तथा ॥ ३२२ ॥
चतुर्भिर्भिद्यते यस्मात् तस्माद् भिन्नक उच्यते।

ननु भिन्नशब्देन किमभिधीयते ; किं विदारितोऽर्थः, एतस्मादयं व्यतिरिक्त इत्यर्थो वा भिन्नशब्दः। एतन्न वाच्यम्। भिन्नोऽत्र विकृत उच्यते। विकृतत्वं च पूर्वोक्तश्रुतिभिन्ने-त्यादिलक्षणात्। ननु पञ्चसु रागेषु मध्ये भिन्नषड्जस्य लक्षणमुच्यते।

"यदा वादी गृहीतः स्यात् संवादी च विमोक्ष्यते।"

इत्यादावेवाभिधानं कुतः। सत्यमुक्तं, मुख्यत्वादस्य। मुख्यत्वं च यथा शुद्धगीतिषु शुद्धषाडवस्य एवं भिन्नगीतिषु भिन्न-षड्जस्येति तद्देशादस्येति। इदानीं भिन्नानां प्रागुक्तलक्षण-प्रकटनार्थं तत्रादौ स्वरभिन्नस्य लक्षणमुच्यते —

यदा वादी गृहीतः स्यात् संवादी च विमोक्ष्यते ॥ ३२३ ॥
विवादी वानुवादी वा स्वरभिन्नः स उच्यते।

अस्यार्थः—मध्यमग्रामाश्रितस्य शुद्धषाडवस्य योऽसा मध्यमो ग्रहांशः तत्स्थाने धैवतोऽपि वादित्वे(न?) नानुवादि-त्वेन वा गृहीतो भवति। मध्यमस्वरस्य संवादी त्यज्यते न्यस्यते वा तदासौ स्वरभिन्न उच्यते। भिन्नषड्जः अत्र वचनाद् वादी, धैवतः पुनर्बहुप्रयोगो भवति।

धैवतांशो मध्यमान्तः पञ्चमर्षभवर्जितः ॥ ३२४ ॥
षड्जोदीच्यवती(जमा? जातो) भिन्नषड्जः स्मृतो बुधैः।

भिन्नषड्जः (षड्जः?) षड्जग्रामसंबन्धः षड्जोदीच्य-

वतीजातेर्जातत्वात् । धैवतो ग्रहोंऽशश्च । मध्यमो न्यासः । ऋषभपञ्चमहीन औडुवितः। निषादगान्धारौ काकल्यन्तरौ । सर्वोपकरणप्रवृत्तस्य विजातीयो निरणानिवृत्तस्य(?) मृगयायां प्रवृत्तस्य नायकस्य प्रवेशादिकासु अस्य विनियोगः । बीभत्सभयानकौ रसौ। धैवतादिमूर्छना . सञ्चारी वर्णः। प्रसन्नादिरलङ्कारः । दक्षिणे कला वृत्तौ कला चित्रे कला। स्वरपदगीते चच्चत्पुटादितालः। पञ्चमस्य स्थाने स्थाने विवादित्वेन गृहीतो भवति। पञ्चमस्य श्चसंवादित्वेन(?) वर्ज्यते कदाचिदसौ भिन्नपञ्चमः स्वरभिन्नोऽभिधीयते । लक्षणं च तद्यथा —

शुद्धपञ्चमवत् प्रोक्तः स्वर(न्धै ? ज्ञै)र्भिन्नपञ्चमः ॥३२५॥
धैवतांशः पञ्चमान्तः सूत्रधारप्रवेशने ।

अस्यार्थः—भिन्न(सं? ) पञ्चमो मध्यमग्रा(म)संबन्धः षड्जोदीच्यवतीजातेः मध्यमा (पञ्चमी) जात्योर्जातत्वात् । ग्रहोंऽशश्च धैवतः। पञ्चमो न्यासः । निषादोऽत्र काकली। कचिन्निषादस्यापि प्रयोगः। सम्पूर्णश्चायम् । सूत्रधारप्रवेशेऽस्य विनियोगः । बीभत्सभयानकौ रसौ । धैवतादिमूर्छना । सञ्चारी वर्णः । प्रसन्नादिरलङ्कारः । दक्षिणे कला वृत्तौ कला चित्रे कला। स्वरपदगीते चच्चत्पुटादितालः ।

इदानीं जातिभिन्नस्य लक्षणमाह —

जातीनामंशकं स्थाय(?) स्वल्पकस्तु बहुस्तथा ॥ ३२६॥
अल्पत्वं च बहुत्वं च प्रयोगाल्पबहुत्वतः ।
सूक्ष्मातिसूक्ष्मैर्वक्रैश्च जातिभिन्नः स उच्यते ॥ ३२७ ॥

अस्यार्थः—शुद्धकैशिकमध्यो हि कैशिकीषड्जमध्यमाजात्योर्जात(य ?)ः । भिन्नकैशिकमध्यस्तु षड्जमध्यमजातेर्जातत्वात् तदंशग्राहित्वेन मस्थायिवर्णग्राहित्वेन च सूक्ष्मा-(ति)सूक्ष्मैः प्रयोगैश्च जातिभिन्नो भवे(दि)त्यर्थः । लक्षणं चास्य यथा—

स्यात् षड्जमध्यमाजा(तै ? ते)भिन्नकैशिकमध्यमः ।
षड्जांशो मध्यमन्यासो मन्द्रैस्तु गमकैर्युतः ॥ ३२८ ॥

भिन्नकैशिकमध्यमः षड्जग्रामसंबन्धः षड्जमध्यमजातेरुत्पन्नत्वात् । षड्(जोंऽश ? जो )स्यग्रहोंऽशश्च । मध्यमो न्यासः । मन्द्रगमकश्च । निषादोऽत्र काकली । पूर्णश्चायम् । दानवीरे चास्य प्रयोगः । वीररौद्रादिको रसः । षड्जादिमूर्छना । वर्णः सञ्चारी । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । चच्चत्पुटादितालः ।

शुद्धभिन्नस्य लक्षणमाह—

परित्यजन्नन्यजातिं स्वजातिकुलभूषणः ।
स्वकं कुलं तु संगृह्णन् शुद्धभिन्नः प्रकीर्तितः ॥३२९।

अस्यार्थः—अन्यां जातिं परिहरन् स्वजातिकुलभूषितं स्वमूलं तु संगृह्णन्निति । शुद्धस्य लक्षणं समग्रं भिन्नकैशिकस्यापि विद्यते । तर्हि को भेदः । (कटी ? गी)तिकृतो भेदः । शुद्धकैशिको हि शुद्धगीत्या गीयते, भिन्नकैशिकस्तु भिन्नगीत्या गीयते । एतदुक्तं भवति — येन संस्थानेन रागीयन्ते शुद्धकैशिकेन तेन (स्थं ?) संस्थानेन भिन्नकैशिके रागीयत(?) इति । लक्षणं चास्य यथा—

शुद्धकैशिकवद् रूपस्वरज्ञैर्भिन्नकैशिकः ।
षड्जांशः पञ्चमन्यासः सम्पूर्णः सप्तभिः स्वरैः ॥ ३३० ॥

अस्यार्थः — भिन्नकैशिको मध्यमग्रामसम्बन्धः कैशिकीकार्मारवीजात्युत्पन्नत्वात् । ग्रहोंऽशश्च षड्जः । पञ्चमो न्यासः । निषादोऽत्र काकलिः । पूर्णश्चायम् । शुद्धकैशिक उदयं ( ? ) यद्यपि रागः तथापि भेदोऽस्ति । मन्द्रबहुलोऽयम् । येन संस्थाने(न) शुद्धकैशिके स्वरालापः क्रियते, तत्संस्थानं विहा(य) तैरेव स्वरैरालापः कर्तव्यः । विभिन्नकैशिके हि तारस्वरैरालापः कर्तव्य इति । रूपान्यत्वेनायं भिद्यते । दानवीरे चास्य विनियोगः । वीररौद्रादिको रसः । षड्जादिमूर्छना । वर्णः सञ्चारी । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

साम्प्रतं भिन्नतानस्य लक्षणमाह —

चतुश्श्रुतिस्वरो यत्र भिन्नो द्विश्रुतिकेन तु ।
(आधा ? गान्धा)रो द्विश्रुतिश्चैव श्रुतिभिन्नः स उच्यते ॥

अस्यार्थः—चतुश्श्रुतेः पञ्चमस्य यदा श्रतिद्वयं गृह्णाति निषादः तदासौ श्रुतिभिन्नोऽभिधीयते । ननु मध्यमग्रामे पञ्चमस्य त्रिश्रु(ति)कत्वात् कथं श्रुतिद्वयं गृह्णाति निषादः । उच्यते । भूतपूर्वन्यायेन चतुश्श्रुतिरुच्यते । यथा भिन्नकैशिकरागे त्रिश्रुतिपञ्चमस्य चश्श्रुतित्वमाश्रित्य लोपः कृतः षड्जग्रामे, एवमत्रापि भविष्यतीति न दोषः । लक्षणं चास्य तद्यथा —

तानस्तु मध्यमन्यासः पञ्चमांशोऽल्पसप्तमः ।
मध्यमापञ्चमीजात्योर्ऋषभेण तु दुर्बलः ॥ ३३२ ॥

अस्यार्थः — भिन्नासिका(?) मध्यमग्रामसंबन्धः, मध्यमापञ्चमीजात्युत्पन्नत्वात् । पञ्चमो ग्रहोंऽशश्च । मध्यमो न्यासः । मध्यमनिषादयोरल्पत्वम् (?) । निषादोऽत्र काकली । पूर्णश्चायम् । प्रौढकरुणेऽस्य प्रयोगः । पञ्चमादिमूर्छना । सञ्चारी वर्णः । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

भिन्नानां ग्रामविभागस्तु काश्यपेनोक्तः । तथाच —

"भिन्नषड्जस्तु षड्जे स्याद् भिन्नकैशिकमध्यमः ।
पञ्चमः कैशिकस्ताने मध्यमग्रामसंश्रितः ॥"

इति भिन्नाः समाख्याता गौडकान् शृणु साम्प्रतम् ।

ननु गौडाः कथम् । उच्यते गौडगीतिसंबन्धत्वात् । किं लक्षणम् । उच्यते । तद्यथा —

ओहाडी मन्त्रजा(?) + तु प्रयोगै(र्द्रु? द्रु)तकम्पितैः ॥
अविश्रामेण त्रिस्थाने गौडगीतिरुदाहृता ।

गौडपञ्चमस्य लक्षणं —

गौडपञ्चमनिष्पत्तौ धैवतीषडजमध्यमे ॥ ३३४ ॥
धैवतांशो मध्यमान्तो (वि? र)हितः पञ्चमेन तु ।

अस्यार्थः— गौडपञ्चमः षड्जग्रामसम्बन्धः, धैवतीषडजमध्यमाजात्योः समुत्पन्नत्वात् । धैवतोंऽशो ग्र(ह)श्च । मध्यमो न्यासः । निषादगान्धारौ काकल्यन्तरौ । पञ्चमरहितोऽयं

षट्स्वरः। उद्भटनाट्ये विप्रलम्भशृङ्गारे चास्य विनियोगः । बीभत्सभयान(क)रसौ रसः। धैवतादिमूर्छना। आरोही वर्णः। प्रसन्नमध्योऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटतालः ।

उत्पन्नः कैशिकीषड्जमध्यमाजातितो मतः ॥ २३५ ॥

षड्जांशः पञ्चमन्या(सः) सम्प्रोक्तो गौडकैशिकः ।

अस्यार्थः — गौडकैशिको रा(मो ? गो) मध्यमग्रामसम्बन्धः । कैशिकीषड्जमध्यमाभ्यां जातः । षड्जोऽस्य ग्रहोंऽशश्च । पञ्चमो न्यासः । निषादोऽत्र काकली । पूर्णश्चायम् । तथा प्रयोगोऽस्ति । त्रिश्रुतिकत्वात् पञ्चमस्य, चतुःश्रुतिकत्वाद् धैवतस्य मध्यमग्रामसम्बन्ध एवासौ रागः। यद्यपि ग्रामद्वयजातौ जातः, तथापि षड्जोऽस्य ग्रामः, न मध्यमः । तथा दर्शनात् । करुणे चास्य विनियोगः । वीरादिको रसः । षड्जादिमूर्छना । आरोही वर्णः । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

षड्जांशो मध्यमन्यासः षड्जमध्यम(वा ? या)कृतः ॥

परिपूर्णस्वरः प्रोक्तो गौडकैशिकमध्यमः ।

अस्यार्थः — गौडकैशिकमध्यमः षड्जग्रामसबंन्धः ष(ड्ज)मध्यमाजाते(त ? )र्जातत्वात्। षड्जोऽस्य ग्रहोंऽशश्च। मध्यमो न्यासः। निषादोऽत्र काकलिः। पूर्णश्चायम्। भयानके

चास्य विनियोगः। वीरादिको रसः। षड्जादिमूर्छना। आरोही वर्णः। प्रसन्नमध्योऽलङ्कारः। दक्षिणे कला वार्त्तिके कला चित्रे कला। स्वरपदगीते चच्चत्पुटादितालः।

इदानीं गौडानां ग्रामविभागमाह —

गौडपञ्चम(ग ? क): षड्जे गौडकैशिकमध्यमः ॥ ३३७ ॥
गौडकैशिकरागस्तु मध्यमग्रामसंश्रयः ।
त्रयो गौडाः समाख्याता रागान् वक्ष्याम्यतः परम्॥

ननु वेसराणां कथं रागशब्दः प्रवर्तते। आ(टो ? सो) पदेशात्। तथाचाह कश्यपः —

"चतुर्णामपि वर्णानां योगा रागः + शोभना (?) ।
स सर्वो दृश्यते येन तेन रागा इति स्मृताः ॥"

दुर्गशक्तिमते रागा एव वेसरा गण्यन्ते। तथाचाह दुर्गशक्तिः —

"स्वराः सरन्ति यद्वेगात् तस्माद् वेसरकाः स्मृताः ।"

दुर्गशक्तिमते वेसरषाडब एव मुख्यः, षाडबत्वेन क्रमायातत्वात्। कश्यपमते तु टक्कराग एव मुख्यः, लक्ष्मीप्रीतिकरत्वात्। तद्यथा —

षड्जांशन्याससंयुक्तष्टगरागोऽल्पपञ्चमः ।
कार(णा ? णं चा)स्य निर्दिष्टे धैवतीषड्जमध्यमे ॥३३९॥

अस्यार्थः — टक्करागः षड्जग्रामसम्बन्धः, धैवतीषड्जमध्यमासमुत्पन्नत्वात्। षड्जोऽस्य ग्रहोंऽशश्च न्यासश्च। निषादपञ्चमयोरत्राल्पत्वम्। निषादगान्धारावत्र काकल्यन्तरौ। पूर्णश्चायम्। शुद्धवीरेऽस्य प्रयोगः। वीराद्भुतौ

रसौ । षड्जादिमूर्छना । वर्णः सञ्चारी । प्रसन्नान्तोऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चञ्चत्पुटादितालः ।

अंशश्च षड्जो न्यासश्च कारणं षड्जमध्यमा ।
सौवीरकस्य गान्धारो निषादश्चापि दुर्बलः ॥ ३४० ॥

अस्यार्थः — सौवीरकः षड्जग्रामसम्बन्धः षड्जमध्यमाजातेर्जातत्वात् । षड्जोऽस्य ग्रहोंऽशो न्यासश्च । गान्धारनिषादयोरल्पत्वम् । निषादः काकली । पूर्णश्चायम् । गृहमेधिनां संयमिनां तापसानां च प्रवेशादिके चरिते शान्तरसे वास्य विनियोगः । वीरादिको रसः षड्जादिमूर्छना । आरोही वर्णः । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चञ्चत्पुटे तालः ।

पञ्चमांशस्तदन्तश्च पञ्चमीमध्यमोद्भवः ।
स्वल्पद्विश्रुतिकश्चैव ज्ञेयो मालवपञ्चमः ॥ ३४१ ॥

अस्यार्थः—मालवपञ्चमो मध्यमग्रामसम्बन्धः, मध्यमापञ्चमीसमुत्पन्नत्वात् । पञ्चमोंऽशो ग्रहो न्यासश्च । निषादगान्धारयोरल्पत्वम् । निषादोऽत्र काकली । पूर्णस्वरश्चायम् । विप्रलम्भश्रृङ्गारे कञ्चुकिप्रवेशे चास्य विनियोगः । पञ्चमादिमूर्छना । रसौ श्रृङ्गारहास्यौ । आरोह्यादिवर्णः । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चञ्चत्पुटादितालः ।

मध्यमांशस्तथा न्यासः कारणं षड्जमध्यमा ।
द्विश्रुतिभ्यां विहीनस्तु भवेद् वेसरषाडवः ॥ ३४२ ॥

अस्यार्थः— वेसरषाडवः षड्जग्रामसंबन्धः, षड्ज-मध्यमाजातत्वात् । मध्यमोंऽशो ग्रहो न्यासश्च । (गान्धार-निषादयोरल्पत्वम् ।) गान्धारनिषादौ काकल्यन्तरौ । नित्यं पूर्णस्वरश्चायम् । शान्तरसे चास्य प्रयोगः । शृङ्गारहास्यौ रसौ । मध्यमादिमूर्छना । आरोही वर्णः । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादि-तालः ।

स्यात् षड्जमध्यमाजातेः पञ्चम्याश्च विनिर्गतः ।
बोट्टरागश्च विज्ञेयः पञ्चमोंऽशो(ऽन्त)मध्यमः ॥ ३४३ ॥

अस्यार्थः—बोट्टरागः षड्जग्रामसंबन्धः षड्जमध्य-मापञ्चमीजात्योर्जातत्वात् । यद्यप्युभयग्रामसंभूतजातिद्वयसमु-त्पन्नः, तथापि पञ्चमस्य चतुःश्रुति(श्रुति ?)कत्वात् षड्जग्राम-संबन्धः । पञ्चमो ग्रहोंऽशश्च । मध्यमो न्यासः । निषादगान्धार-योरल्पत्वम् । निषादोऽत्र काकली । पूर्णस्वरश्चायम् । उत्सवे चास्य विनियोगः । शान्तादिको रसः पञ्चमादिमूर्छना । आरोही वर्णः । प्रसन्नान्तोऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

षड्जांशन्याससंयुक्तो धैवत(न्त ?)र्ष(भ)वर्जितः ।
धैवत्यार्ष(भी ? भिका)त्यक्तो भिन्दोलः प्रेक्षके भवेत् ॥३४४॥

अस्यार्थः—भिन्दोलको मध्यमग्रामसंबन्धः धैवत्या-र्षभीरहितः । उभयग्रामसंबन्धशेषस्वराख्यजातिसमुत्पन्नत्वादु-भयग्रामिकत्वमेव युक्तम् । कथं मध्यमग्रामाश्रित इति । धै-वतर्षभी(ही)नत्वान्मध्यमग्रामसंबन्ध एव । भरतकोहलादिभि-

राचार्यैः षड्जग्रामधैवतर्षभलोपस्यानिष्टत्वात् केचित् षड्जग्रामाश्रित एवायामिति मन्यन्ते । चतुःश्रुतिकस्य पञ्चमस्यात्रोपलम्भात् । धैवतस्य चानाशित्वं तानविषयमेव द्रष्टव्यं न सर्वत्रेति । एतच्चायुक्तम् । एवं हि सति ग्राममू(र्छ)नाभेदो न स्यादिति । षड्जोऽस्य ग्रहोंऽशो न्यासश्च । निषादोऽत्र काकली । धैवतऋषभहीन(श्च ?)मौडबितम् । सम्भोगशृङ्गारेऽस्य विनियोगः । वीरादिरसः । मूर्छना(दि ?)षड्जादिः । वर्ण आरोही । प्रसन्नादिरलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

धैवतांशस्तदन्तश्च स्वल्पद्विश्रुतिकस्वरः ।
धैवतीमध्यमाजात्योः सञ्जातष्टककैशिकः ॥ ३४५ ॥

अस्यार्थः—धैवतीमध्यमाजात्योर्जातत्वाट्टककैशिकः षड्जग्रामसंबन्धः । ननु (यस्याज ? उभय)ग्रामसंबन्धिन्योर्जा(न्यो ? त्योः) समुत्पन्नोऽयं रागः षड्जग्रामसंबन्ध इति (कथं)वक्तुं युक्तम् । अस्य प्रयोगे चतुःश्रुतिसंबन्धः पञ्चम उपलभ्यते । (पञ्चमे धैवतेन भिन्नग्रामयोर्भेदकारिणौ ?) । अतः पञ्चमस्य चतुःश्रुतिकत्वात् षड्जग्रामसम्बन्ध एवायं रागः । ग्रहोंऽशो न्यासश्च धैवतः । निषादगान्धारौ चात्र काकल्यन्तरौ । पूर्णस्वरश्चायम् । कश्यपमते निषादगान्धारयोर्लोपादयमौडुबितः । उद्भटनाट्ये कामग्रस्ततत्कञ्चुकिप्रवेशे चास्य विनियोगः । बीभत्सादिरसः । मध्यमादिधैवता( ? ) मूर्छना । आरोही वर्णः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चञ्चत्पुटादितालः ।

कैशिकीजातिसम्भूतिः षड्जांशन्याससंयुतः ।
दुर्बलो धैवतेन स्याद् रागो मालवकैशिकः ॥ ३४६ ॥
पञ्चमं केचिदिच्छन्ति हास्याद्या + + कर्मणि ।
गान्धारं च तथा चान्ये तद्धि लक्ष्ये न दृश्यते ॥ ३४७॥

अस्यार्थः—मालवकैशिको मध्यमग्रामसम्बन्धः, कैशिकीजातेर्जातत्वात् । षड्जो ग्रहोऽशो न्यासश्च । धैवतस्यात्राल्पत्वम् । प्रयोगो निषादोऽत्र काकलिः । पूर्णस्वरश्चायम् । विप्रलम्भे शृङ्गारे चास्य विनियोगः । वीरादिको रसः । षड्जादिमूर्छना । आरोही वर्णः । अलङ्कारः प्रसन्नमध्यमः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

इदानीं वेसराणां ग्रामविशेषो दृश्यते —
टक्करागश्च सौवीरस्तथा वै टक्ककैशिकः ।
बोट्टरागश्च षड्जाख्ये भवेद् वेसरषाडवः ॥ ३४८ ॥
हिन्दोलकस्तु विज्ञेयो मध्य(म)ग्रामसम्भवः ।
मालवपञ्चमश्चैव मालवकैशिकस्तथा ॥ ३४९ ॥
इति वेसरकाः प्रोक्ताः सर्वे निश्चितलक्षणाः ।
स्वराणां दृश्यते वेगस्तेन वेगस्वराः स्मृताः ॥ ३५० ॥
शुद्धा भिन्नाश्च गौडाश्च तथा वेगस्वराः परे ।
कथिताः साम्प्रतं वक्ष्ये सप्त साधारणांस्ततः ॥ ३५१ ॥

ननु साधारणा(नां) कथं साधारणत्वम् । उच्यते । पूर्वोक्तानां सर्वेषां रागाणां या गीतयस्ताभि(र्जी ? र्जा)यमा

न्त्वात् तेषां साधारणत्वम् । एतत् साधारणगीत्या गीयमानत्वात् । तथा चाह कश्यपः —

"पञ्च साधारणाः प्रोक्ताः सर्वगीतिसमाश्रयाः ।"

ननु काश्यपमुनिना न(क ?)र्तरागस्य किमित्यादौ निर्देशः कृतः । उच्यते । उद्भटचारिमण्डलादौ विनियुज्यमानत्वाद् मुख्यत्वमिति कश्यपमते । दुर्गशक्तिमते तु षड्जकैशिक एव मुख्यः । कुतः । षाडवत्वेन क्रमायातत्वात् । तद्यथा —

पञ्चमांशो मध्यमान्तः पञ्चमीमध्यमोद्भवः ।
नर्तरागस्तु विज्ञेयः स्वल्प(वि ? द्वि)श्रुतिकस्वरः ॥ ३५२ ॥

अस्यार्थः—नर्तरागः मध्यमग्रामसम्बन्धः, पञ्चमीमध्यमोद्भवत्वात् । पञ्चमो ग्रहोंऽशश्च । मध्यमो न्यासः निषादगान्धारयोरत्राल्पत्वम् । निषादोऽत्र काकली । उद्भटचारिमण्डला(जौ ? दौ) चास्य विनियोगः । शृङ्गारादिरसः । पञ्चमादिमूर्छना अलङ्कारः प्रसन्नमध्यमः । वर्णः सञ्चारी इति कश्यपमते दुर्गशक्तिमते तु अयमेव रागः पञ्चमीधैवतीजात्योर्जायते । षड्जग्रामसंबन्ध एव बोद्धव्यः । कुतः । पञ्चमस्य चतुःश्रुतिकत्वात्, धैवतस्य त्रिश्रुतिकत्वात् षड्जग्रामसंबन्धः ।

स्यात् षा(जि ? ड्जी)धैवतीजात्योः षड्जन्यासांशसंयुतः ।
दुर्बलः पञ्चमो यत्र *काकल्यः (?)परिकीर्तितः ॥ ३५३ ॥

अस्यार्थः — शकः षड्जग्रामसम्बन्धः षाड्जीधैवतीसमुत्पन्नत्वात् । षड्जोऽस्य ग्रहोंऽशो न्यासश्च । (पञ्चमस्या-

---

* 'स शकः' इति पाठः स्यात् ।

ल्पत्वम् ।) निषादगान्धारौ चात्र काकल्यन्तरौ । पूर्णस्वरश्चायम् । वीराद्भु(तो ? ते) हास्ये निर्वहणे चास्य विनियोगः । वीरादिको रसः । षड्जादिमूर्छना । आरोही वर्णः । प्रसन्नमध्योऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

मध्यमापञ्चमीजात्योर्धैवत्याश्च विनिस्सृतः ।
ककुभः पञ्चमन्यासो धैवतांशस्तु निर्मितः ॥ ३५४ ॥

अस्यार्थः—ककुभः षड्जग्रामसम्बन्धः मध्यमापञ्चमीधैवतीसमुत्पन्नोऽपि षड्जग्राम एव । कुतः । पञ्चमस्य चतुःश्रुतिकत्वाद्, धैवतस्य श्रुतिकत्वाच्च धैवतोऽस्यांशो ग्रहश्च । पञ्चमो न्यासः । पूर्णस्वरश्चायम् । मध्यमकरणेऽस्य विनियोगः । करुणोऽस्य रसः । धैवतादिमूर्छना । आरोही वर्णः । प्रसन्नमध्योऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला स्वरपदगीते चच्चत्पुटादितालः ।

षड्जांशो मध्यमन्यासः स्वल्पषड्श्रुति(क)स्वरः ।
शुद्धमध्यमिकाजातेर्भवेद् भम्माणपञ्चमः ॥ ३५५ ॥

अस्यार्थः— भम्माणपञ्चमो मध्यमग्रामसम्बन्धः, शुद्धमध्यमाजातेः समुत्पन्नत्वात् । षड्जो । ग्रहोंऽशश्च मध्यमो न्यासः । निषादगान्धारयोरल्पत्वम् । निषादोऽत्र काकली । पूर्णस्वरश्चायम् । पथि ग्रीष्मे श्रान्तेष्वरण्येषु चास्य विनियोगः । वीरादिरसः । षड्जादिमूर्छना । आरोही वर्णः । प्रसन्नमध्योऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

षड्जमध्यानिषादाभ्यां रूपसाधारितो भवेत् ।
षड्जांशो मध्यमन्यासः पञ्चमर्षभस्वल्पकः ॥ ३५६ ॥

अस्यार्थः—रूपसाधारितः षड्जग्रामसम्बन्धः, षड्जमध्यमानिषादसकाशादुत्पन्नत्वात् । षड्जोऽस्य ग्रहोंऽशश्च । मध्यमन्यासः। (पञ्चमर्षभयोरल्पत्वम्)। निषादोऽत्र काकली । पूर्णश्चायम् । वीरकरुणेऽस्य प्रयोगः । वीरादिरसः । षड्जादिमूर्छना । आरोही वर्णः । अलङ्कारः प्रसन्नमध्यः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

गान्धारीरक्तगान्धार्योर्जातो गान्धारपञ्चमः ।
गान्धारोऽस्य भवेदंशो न्यासो गान्धार एव च ॥ ३५७ ॥

अस्यार्थः—गान्धारपञ्चमो मध्यमग्रामसम्बन्धः, गान्धारीरक्तगान्धारीसमुत्पन्नत्वात्। यद्यपि दुर्गशक्तिमते धैवतीसमुत्पन्नोऽसौ, तथापि पञ्चमस्य त्रिश्रुतिकत्वाद् उभयग्रामजातिजातोऽपि मध्यसम्बन्ध एव। गान्धारोऽस्य ग्रहोंऽशो न्यासश्च। प्रयोक्तृप्रेक्षया गान्धारो धैवतो भवेत्। निषादोऽत्र काकली। पूर्णश्चायम्। अद्भुते(ऽस्य विनियोगः ?।) विस्मये हास्ये चास्य विनियोगः।करुणो र(स)ः। गान्धारादिमूर्छना। सञ्चारी वर्णः । प्रसन्नमध्योऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

धैवत्यार्ष(भी ? भिका)जात्योर्जातः पञ्चमषाडवः ।
ऋषभां(श)समायुक्तो मध्यमो न्यास एव च ॥ ३५८ ॥

अस्यार्थः—पञ्चमषाड(वः) षड्जग्रामसंबन्धः। ऋषभोऽस्य ग्रहोंऽशश्च। मध्यमो न्यासः, प्रयो(क्त? क्तृ)-प्रेक्षया क्वचिदंशोऽपि निषादोऽत्र काकली। पूर्णश्चायम्। उद्भटचारिमण्डला(जौ? दौ) विनियोगः। वीरादिरसः। ऋषभादिमूर्छना। प्रसन्नाद्यन्तोऽलङ्कारः। दक्षिणे कला वार्त्तिके कला चित्रे कला। स्वरपदगीते चच्चत्पुटादितालः।

ऋषभांशो मध्यमान्तः संपूर्णस्व(र)कस्तथा।
आर्षभीमध्यमाजात्यो रेवगुप्तः प्रकीर्तितः॥ ३५९॥

अस्यार्थः—रेवगुप्तः षड्जग्रामसंबन्धः। आर्षभीमध्यमजात्योरुत्पन्नोऽपि षड्जग्रामसंबन्ध एव। पञ्चमस्य चतुःश्रुतिकत्वात्। ऋषभोऽस्य ग्रहोंऽशश्च। न्यासो मध्यम एव च। निषादोऽत्र काकली। पूर्णस्वरश्चायम्। उद्भटचारिमण्डला-(जौ? दौ) विनियोगः। वीरादिरसः। ऋषभादिमूर्छना। आरोही वर्णः। प्रसन्नाद्यन्तोऽलङ्कारः। दक्षिणे कला वार्त्तिके कला चित्रे कला। चच्चत्पुटादितालः।

[इदानीं साधारणानां ग्रामविभागः प्रदर्श्यते—
हर्मीणपञ्चमे ज्ञेयो मध्यमग्रामसम्भवः।
गान्धारपञ्चमो नर्तः षड्(ज)कैशिक एव च॥ ३६०॥
रूपसाधारणः?]

स्यात् षाड्जीधैवतीजात्योष्टक्करागस्तु सैन्धवः।
षड्जांशन्याससंयुक्तः पञ्चमेन तु दुर्बलः॥ ३६१॥

अस्यार्थः— टक्कसैन्धवरागः षड्जग्रामसंबन्धः,

षाड्जधैवतीसमुत्पन्नत्वात् । षड्जोऽस्य ग्रहोंऽशो न्यासश्च । निषादगान्धारौ (चित्रे ? चात्र) काकल्यन्त(रेण ? रौ) पञ्चमस्याल्पत्वम् । पूर्णस्वरश्चायम् । शुद्धवी(र्ये ? रे)ऽस्य विनियोगः । वीरादिको रसः । षड्जादिमूर्छना । आरोही वर्णः । प्रसन्नान्तोऽलङ्कारः । दक्षिणे कला वार्त्तिके कला चित्रे कला । स्वरपदगीते चच्चत्पुटादितालः ।

इदानीं साधारणानां ग्रामविभागः प्रदर्श्यते —

भम्माणपञ्चमो ज्ञेयो मध्यमग्रामसम्भवः ।
गान्धारपञ्चमो नर्तः षड्जकैशिक एव च ॥ ३६२ ॥
रूपसाधारितो रागः शकः ककुभ एव च ।
रेवगुप्तस्तु षड्जाख्ये ज्ञेयः पञ्च(म)षाडवः ॥ ३६३ ॥
सप्त साधारणाः प्रोक्ता ग्रामद्वयस(माश्र)याः ।

ननु पूर्वोक्तानां मूर्छनाविशेषनिर्देशः कस्माज्ज्ञायत इति । उच्यते । (आप्तवचनाद्) मूर्छनाविशेषो ज्ञायते । तथाचाह काश्यपः—

"ज्ञात्वा जात्यंशबाहुल्यं निर्देश्या मूर्छना बुधैः ।"

ननु गीतराग(योः को) भेदः । उच्यते । दशलक्षणलक्षितं गीतं रागशब्दाभिधेयम् । गीतं चतुरङ्गोपेतम् । ध्रुवायोगात् पञ्चविधम् । कुत एव विज्ञायते । आप्तवचनात् । तथाचाह काश्यपः —

"क्वचिदंशः क्वचिन्न्यासः षाडवौडुविते क्वचित् ।
अल्पत्वं च बहुत्वं च ग्रहापन्यासंयुतम् ॥

मन्द्रतारौ तथा ज्ञात्वा योजनीयं मनीषिभिः ।
ग्रामरागाः प्रयोक्तव्या विधिवद् दशरूपके ॥
प्रवेशाक्षे(म ? प)नि(षः ? ष्क्राम)प्रासादिकमथान्तरम् ।
गानं पञ्चविधं यत् तद् रागैरेभिः प्रयोजयेत् ॥
पूर्वरङ्गे (तु) शुद्धा स्याद् भिन्ना प्रस्तावनाश्रया ।
वेसरामुखयोः कार्या गर्भे गौडी विधीयते ॥
*साधारितावमर्शे स्या + हणे स्यात् + सर्वदा (?) ।"

इति मतङ्गमुनिविरचितबृहद्देश्यां
रागलक्षणं तृतीयं समाप्तम् ॥

---

## अथ भाषालक्षणम् ।

ग्रामरागा मया सर्वे कथिता लक्षणान्विताः ॥ ३६४ ॥
भाषाणां तु प्रवक्ष्यामि लक्षणं च ततः शृणु ।
भाषा चतुर्विधा प्रोक्ता मूलसङ्कीर्णदेशजाः ॥ ३६५ ॥
छायामात्राश्रयाः प्रोक्ता ग्रामरागे व्यवस्थिताः ।

काश्यप उवाच ।

"कीदृशी तु भवेद् भाषा सङ्कीर्णा देशजातरे (?) ।
छायामात्रानुगाः प्रोक्ता ग्रहांशन्याससंयुताः ॥
कतमा षाडबा तत्र कतमौडुविता भवेत् ।
पूर्णा तु कतमा ज्ञेया साधारणकृता तु सा ॥
ग्रामरागेषु का कुत्र कीदृशी गी (तये ? यते) जनैः ।
कतमा प्राप्यते भाषा विभाषा कतमा भवेत् ॥

---

* 'साधारितावमर्शे स्यात् सन्धौ निर्वहणे तथा' इति सङ्गीतरत्नाकरोद्धृतं भरतवाक्यं दृश्यते ।

कतमान्तरभाषा वै कतमा स्यादनुक्रमात् ।
एतन्मे ब्रूहि तत्त्वेन महत् कौतूहलं हि मे ॥

याष्टिक उवाच ।

शृणुष्वावहितो भूत्वा भाषालक्षणमुत्तमम् ।
यत् पृथिव्यां प्रयत्नेन गीयते गीतवेदिभिः ॥

प्रकाशं नच लक्ष्यन्ते यत्नहीनैस्तु गायकैः ।
प्रगीतास्तु प्रसिध्यन्ति सुस्वराणां विशेषतः ॥

अहं ते कथयिष्यामि सर्वं तत्त्वेन लक्षणम् ।
पूर्वं ग्रामद्वयं प्रोक्तं ग्रामरागास्तदुद्भवाः ॥

ग्रामरागोद्भवा भाषा भाषाभ्यश्च विभाषिकाः ।
विभाषाभ्यश्च सञ्जातास्तथा चान्तरभाषिकाः ॥

टक्करागे दश द्वे च केचिदिच्छन्ति षोडश ।
तत ऊर्ध्वं निगद्यन्ते चाष्टौ मालवकैशिके ॥

ककु(भैः ? भे) सप्त वै प्रोक्ताः पञ्च हिन्दोलके स्मृताः ।
पञ्चमे दश विख्याता भिन्नषड्जे नव स्मृताः ॥

सौवीरके चतस्रस्तु चतस्रो भिन्नपञ्चमे ।
बोट्टरागे तथाप्येका तथा मालवपञ्चमे ॥

टक्ककैशिकजास्तिस्रो द्वे च वेसरषाडवे ।
भिन्नताने तथा ह्येका चैका गान्धारपञ्चमे ॥

पञ्च(मा ? म) षाडवे ह्येका इत्येतास्तु समासतः ।
भाषा विभाषाः कथितास्त्र्यधिका सप्ततिर्बुधैः ॥

भाषाणां चैव नामानि लक्षणं च निबोधत ।
प्रथमा त्रवणा ज्ञेया द्वितीया त्रवणोद्भवा ॥
वेरञ्जिका तृतीया तु छेवाटी च चतुर्थिका ।
मालवेसरिका तत्र प्रयोक्तव्या तु पञ्चमी ॥
षष्ठी च गूर्जरी ज्ञेया सौराष्ट्री सप्तमी तथा ।
अष्टमी सैन्धवी चैव वेसरी नवमी तथा ॥
पञ्चमाख्या तु दशमी रविचन्द्रा तथा भवेत् ।
अम्बाहीरी तु ललिता स्मृता कोलाहली ततः ॥
मध्यमग्रामदेशा च तथा गान्धारपञ्चमी ।
इत्येताः प्रकटा भाषाष्ट(क्क)रागस्य षोडश ॥
शुद्धा तु प्रथमा ज्ञेया चाद्यवेसरिका ततः ।
हर्षपुत्री तृतीया तु माङ्गाली च चतुर्थिका ॥
पञ्चमी सैन्धवी ज्ञेया आभीरी षष्ठिका मता ।
खञ्जरी गुञ्जरी चैवमष्टौ मालवकैशिके ॥
काम्बोजा प्रथमा ज्ञेया मध्यमग्रामिका मता ।
सालवाहानिका चैव तदन्ते भागवर्धनी ॥
पञ्चमी मुहरी ज्ञेया षष्ठी च शकमिश्रिता ।
प्रयोक्तव्या प्रयत्नेन सप्तमी भिन्नपञ्चमी ॥
एतास्तु ककुभे सप्त भाषा ज्ञेया मनोहराः ।
प्रथमा वेसरी ज्ञेया द्वितीया चैव मञ्जरी ॥
ततः कार्या च छेवाटी चतुर्थी षड्जमध्यमा ।
पञ्चमी मधुरी ज्ञेया पञ्च हिन्दोलकोद्भवाः ॥

आभीरी भाविनी चैव माङ्गाली सैन्धवी तथा ।
गूर्जरी दाक्षिणात्या च अन्ध्री त्वान्नोद्भवा परा ॥
नवमी त्रावणी ज्ञेया कैशिकी दशमी स्मृता ।
एता भाषास्तु विज्ञेया गायकैः पञ्चमोद्भवाः ॥
विशुद्धा दक्षिणान्या तु गान्धारी तदनन्तरम् ।
श्रीकण्ठी चैव पौराली माङ्गाली सैन्धवी तथा ॥
कालिन्दी च पुलिन्दी च भिन्नषड्जोद्भवा नव ।
सौवीरी प्रथमा ज्ञेया द्वितीया वेगमध्यमा ॥
साधारिता तृतीया तु गान्धारी च चतुर्थिका ।
भाषा सैन्धविकी ज्ञेया ज्ञेयाः सौवीरकोद्भवाः ॥
शुद्धा भिन्ना तु वाराही तथा धैवतभूषिता ।
वराटी च ततः प्रोक्ता भिन्नपञ्चमसम्भवाः ॥
मालवपञ्चमे जाता भाविनी लोकभाविनी ।
मङ्गल्याख्या तु या भाषा बोट्टरागोद्भवा तु सा ॥
टक्ककैशिकजा ज्ञेया तृतीया वेगमध्यमा ।
मालवा भिन्नबालीका + + + + + + + + + ॥
तृतीया द्राविडी तत्र भाषा लक्षितलक्षणा ।
बाह्यषाडनदाख्या + जाता वेसरषाडवे ॥
तानोद्भवा तु विज्ञेया भिन्नताने व्यवस्थिता ।
गान्धारपञ्चमे ह्येका भाषा + + + + + + ॥
गान्धारी + + + + + पञ्च + लोकरञ्जिका ।
रेवगुप्ते शकाख्यैका प्रोक्ता पञ्चमषाडवे ॥

इत्येताः प्रकटा भाषाः प्रजायन्ते ह्यनेकशः ।
सोदाहरणमेतासां लक्षणं चाधुना शृणु ॥
मध्यमांशा तु षड्जाता पञ्चमेन विवर्जिता ।
धैवतस्य निषादस्य षड्जस्येव तयोस्तथा ॥
परस्परं तु गमनं दृश्यतेऽत्र पुनः पुनः ।
स्यादियं षाडबा ज्ञेया मूलाख्या त्रवणा भवेत् ॥

उदाहरणं—मासासासासानिधानिधानीधागासासा । धानिसामागागागामासासातथासासासागामाधानीधाधा-मारीगारीरीमरिगासासानिधासासा । नीधगासासानिधनिमा-मानिधासासानिधासगमागासानीधनीसा । त्रिपणा ।

षड्जाता मध्यमांशा वै गान्धारबहुला सदा ।
पञ्चमेन विहीना तु मुहरी षड्जधैवतः ॥
सङ्कीर्णेयं सदा ज्ञेया षाडबा त्रवणोद्भवा ।

उदाहरणं— मानीनीनीसास । सारीरीरगिागाग-माम । मामारी । गरिनिनिधा । धाधामामगारिगा । सामा गारी । सनिनिगागानिनिधासरिगारीमा । गामामानीनीससा त्रपणोद्भवा ।

(धे ? वे)रञ्जिका तु विज्ञेया गान्धारांशाल्पपञ्चमा ।
षड्जन्यासा तु कर्तव्या षड्जधैवतयोस्तथा ॥
गमनं संप्रयुज्या तु(?) गान्धारर्ष(भ) योस्तथा ।
एवं भाषा तु विज्ञेया षाडबा तु निगद्यते ॥

उदाहरणं — गानिगागाधरिमामागामामागारीगास सासानिगारीनिनिधाधाधनिगारीमागारिसनीधनी । सासाग मामाधासासंगनिगानिगानिगधरीगरीरिगादिरीगममधमम - मधरीगसासासासनीगारीगानिनिधामाधानिधासनीगारीमम- रिसानिधानिसासा । वेरञ्जिका ।

षड्जाद्यन्तसमायुक्ता संपूर्णा मध्यमोज्ज्वला ।
षड्जमध्यमसंवादो द्विश्रुतीनां परस्परम् ॥
मूकभाषा तु विज्ञेया छोहारी गेयवेदिभिः ।

उदाहरणं — सागागपा । वामबामगामामारागसा- सासासमागपापा । पाधनीधा । मवापामापामामामगाससारि- धानिसासासधानीगारीगामावागनिसानीगारीनिसासा । नि- धावामागारीगासा । मानीधनीधासा । छेवाज

षड्जन्यासा निषादांशा दुर्बला पञ्चमेन तु ।
षड्जगमारसंवादः षड्ज(मध्यमं ?)मध्यमयोस्तथा ॥
भाषेयं षा(ड)वा ज्ञेया मूलाख्या मालवेसरी ।

उदाहरणं — निधानिनीसदिसासागामागाधारिसमा- मासागासारिसासागधरिसा । गामाधामामागाधागा । सासा- सा । मालवेसरी ।

निषादर्षभषड्जान्ता सम्पूर्णा षड्जमध्यमा ।
संग + तत्र विज्ञेया पञ्चमर्षभयोस्तथा ॥
देशभाषात्र विख्याता गूर्जरी परमोज्ज्वला ।

उदाहरणं— निसासानिपापानीधानीनीसानीसासा । सारिसारिरि । सामागा । रिरि । नीनीनी । वावावा । नि- धानि । नीगासा । गूर्जरी ।

नि(षा)दांशा तु षड्जान्ता संपूर्णा नित्यमेव हि ।
सौराष्ट्रिका तु भाषेयं देश्याख्या गीयते जनैः ॥

उदाहरणं—निनिधानिदेसासानिरिगासासासागागा-साधनिनिनिधामामानिनिनिनिधासासागासासागासास धा-निधानिधामामामारिगासासागासनीसासासा । सौराष्ट्री ।
(प सैवमी मध्यमा ?)

सै(वमी ? न्धवी) मध्यमांशा तु षड्जान्ता धैवतोज्ज्वला ।
सुसम्पूर्णस्वरा ह्येषा षड्जधैवतयोस्तथा ॥

गामारमध्यमानां तु गमकं दृश्यते घनम् ।
देशभाषा तु देशाख्या सैन्धवी टक्करागजा ॥

उदाहरणं—सासासासा । सनीनीनीनी धाधासरि-सानीधाधाधरिनिधाधा । धानिसा । गारीमामामा । गमागामा-साधासारीमामामासारिगामापापाधानिपधापामागारीरी निरि-निधाधाधनीसारीगामामागामामागामामामासासा । सैन्धवी ।

षड्जाद्यन्तसमायुक्ता पञ्चमेन विवर्जिता ।
धैवतनिषादयोश्च षड्जधैवतयोस्तथा ॥

परस्परं तु गमनं दृश्यते च क्षणे क्षणे ।
भाषेयं षाडबा ज्ञेया वेसरीका प्रयोक्तृभिः ॥

उदाहरणं—सासा । सधानि । धासासासामामागा-मागामासाधामागारीसासासा । वेसरिका ।

पञ्चमांशा तु षड्जान्ता सम्पूर्णा लोकरञ्जिका ।
पञ्चमर्षभसंवादः षड्जमध्यमयोस्तथा ॥
भाषेयं पञ्चमाख्या तु सम्पूर्णा समुदाहृता ।

उदाहरणं — पापापारिपा । रिपापापावमापापामपमा सासासरीरीरि । निधाधपापा । पसामामागिरीगगरिसपासपाव गारिसागारिसारिपापारिरिगिरि । गाधामागारिरि धत्ररिगसासा । पञ्चमाख्या । रद्धि च(?)

मध्यमन्द्रा तु षड्जान्ता गान्धारांशाल्पसप्तमा ।
+ षेगान्धारयोस्तु + षड्जमध्यमयोस्तथा ॥
परस्परं तु गमनं यत्र तत् सम्प्रयोजयेत् ।
सा सङ्कीर्णादयो ज्ञेया भाषा वै रविचन्द्रिका ॥
टक्करागजा ।

उदाहरणं—मागागामा । सासा । मागाभामागामासा-सासा । गागाधानिसासागाधनिसा धाधामारीमागारीगसा-सासासामासारीधाधाधाधा धमागरीगागा धारीसासासा । मा-गामामागा । मासासामागा धाधाधापरीगमरीगमसासासामा-गारीधाधमगरिगमधनी । सासागाधानिसासा । रविचन्द्रा ।

मध्यमांशा तु षड्जान्ता बाहुगान्धारधैवता ।
असम्पूर्णस्वरा नित्यमम्बाहेरी प्रकीर्त्तिता ॥
भाषेयं कै + + न्नित्यं देशाख्या सम्प्रकीर्तिता ।

उदाहरणं—सासासा । नीनी । निधाधानी तथानि । धानिधाधानी । सागागारी । सनीसनीधा । निधानिगागा-मागानिसासानि । साधानीगागानिसासा । सानिनीसनीधा

धामानीमाधासनिनी । नीसाधानीमाधाधामागासानिसानि-धा । माधाधा । साधानीधानीसासा । मामाधासासा । मा-मागारीमागासासा । मासामामागारीमागासासा । मसानी निनिमानि धाधानिधामागा । सानीमाधा । सासनीधा धनि-साधाधा । धनिधानीसा । अम्बाहेरी ।

षड्जाद्यन्तसमायुक्ता बाहुलाद्यमधैवता ।
विश्रुतिभ्यां तु गमनं (भीत ? हीन)त्वमृषभेण तु ॥
भाषा औडुबिता ह्येषा सङ्कीर्णा लालिता भवेत् ।

उदाहरणं—सागागाधागामामागा । धमधानीसासा । निधागागा । सासासामापाधानी धापामासा साधापाधानी-धाधासानीधागारीगाधनी सरसा ललिता ।

षड्जाद्यन्तसमायुक्ता पञ्चमेन विवर्जिता ।
विनिर्हिता सप्तमेन तु षड्जे मध्यमसङ्गता ॥
भाषा औडुबिता + + सङ्कीर्णा टक्करागजा ।
कोलाहली तु विख्याता गीयते गानवेदिभिः ॥

उदाहरणं— सामासामा । मामागाधामागारिसासा । धासागागारिसासा । माधसासारिरीरिगागामामागारीगाधामा-रीसासा । धानीसासामा धनीमाधनीनीधापागरीगासासासा-मागारीसासागारीमागारीसाधाधामागारीसा । कोलाहली ।

मध्यमांशा तु षड्जान्ता षड्जमध्यमसङ्गता ।
असम्पूर्णा स्मृता नित्यं मध्यमग्रामिका मता ॥
सङ्कीर्णेयं सदा भिन्नटक्करागे व्यवस्थिता ।

उदाहरणं—माधानी । गाधानी । सानीधा । मामामाधानीमाधानीसासामाधानी । मा । धानीनी । धापागारीगासासा । गासासा । नीनीसानी । धाधा । निधामामामाधानीधामामा धनीमाधानीसासा। आलापाकं मध्यमदेहा(?) ।

धैवतांशा तु षड्जान्ता गान्धारस्वरभूषिता ।
गान्धारपञ्चमी ज्ञेया षड्जमध्यमसंयुता ॥
पूर्णा च + + सङ्कीर्णा गीयते पालकिन्नरैः ।

उदाहरणं— पधापापाधामामा । धापामामा धापामागारी । गागा । धापमागासा । सामासानीधाधा । माधानीसासा । सागागसागागधरिधामामाधरीगागामाधापामागासा नीधानी सासापासा । गान्धारपञ्चमीका ।

एताश्च याष्टिके प्रोक्ताः टक्करागस्य षोडश ।
अतः परं प्रवक्ष्यामि लक्षणं च समासतः ॥
पञ्चमांशा तु षड्जान्ता शुद्धा मध्यमभूषिता ।
विभाषा टक्करागोत्था भाषान्तेषु च गीयते ॥

उदाहरणं — पापानीसासानीसारीमा धारीधापापामागागा ।

अथ मालवकैशिके—

षड्जाद्यन्तसमायुक्ता बाहुलौ षड्जमध्यमौ ।
+ संपूर्णस्वरा ज्ञेया पौरालीदेशसम्भवा ॥
भाषेयं प्रथमा ज्ञेया मध्यमा मालकौशिके ।

उदाहरणं—सागासागागाधरिगरिहरिमा । ममगग। गरिसानीधाधा सागागा । गारीगारी । सासागामानीधाधापा-

मारीसासागानीधानी सासापासा । शुद्धाः । गमा । गागा-गागापापा । मामागागा । सामामामा । मामा । मामारीरी । रिगागारीसासासारी । मगसासामागारीसानी । सासा । पौराली ।

मध्यमांशा तु षड्जान्ता विभाषा पूर्णसुस्वरा ।
गीयतेर्षे + (?)संयुक्ता शुद्धमालवकैशिके ॥

उदाहरणं — मामाधासागारीसासा । निधासासा-धानिमामाधानीसा । रिगामासा । साधामागारिगासासा । शुद्धा ।

मध्यमांशा तु षड्जान्तसंपूर्णा चाद्यवेसरी ।
दुर्बला च निषादेन बहुलौ षड्जमध्यमौ ॥
सङ्कीर्णेयं यदा ज्ञेया भाषा गान्धर्ववेदिभिः ।

उदाहणं— मामागामासासा । सामापापाधासाधा । पापामामा । गमगमाग । सासासासा । गामापापाधपापाध-म्मपामा । गमगमगारीसा धासासागागधरि । मामागरि । साधासासा । सरिरिरिगागारी । सासासधाममगाससससास । सासाधाधापापासपापञ्चमधाधापञ्चसापाधाधाधापा । पमा-गासा । सासागारीगारी गाधासासा । अद्यवेसरी ।

षड्जाद्यन्तसमायुक्ता मध्यमर्षभसंगता ।
द्विश्रुतिभ्यां तु रूढा तु काकल्यन्तरसङ्करः ॥
साधारणकृता ह्येषा देशाख्या हर्षपूरि(म ?)ता ।

उदाहरणं — सानीधानीसासामापा । मांगांधामा । गासासागा । गधानी । सासाधासा । नीधापापागगामगाम-सासानीधासासा । पामागाधामागासासा । पामापापासरि-सासासामागा । गपापानिधा । सरिनीपामागागानिधासासा-सरीसरी । सासारिधापापा । मागारिसासासारीसासासासमा । गमागमागमागपापामागारीसरीसासा । सापामागारिसागग । सरिमागारीसानीससा । हर्षपूरी ।

माङ्गाली मध्यमांशा तु षड्जाता मध्यमोज्ज्वला ।
मध्यमर्षभसंपूर्णा + + + लोकरञ्जिका ॥
एषा भाषा तु विज्ञेया माङ्गाली गेयवेदिभिः ।

उदाहरणं — मागामा । गासामापमा । गमपापास-निसासानीपापापाम । गममगगमामा । सगम । पापानीसानि-सासासनीसासासनीपापा........पाम । पापामगा । पमगाप-मगा । मामामग । सासागमापापासनीरीरी । मागारी । सनि ससा । माङ्गाली ।

सैन्धवी चैव कर्तव्या षड्जाद्यन्तविभूषिता ।
षड्जमध्यमबहुला निषादर्षभयोस्तथा ॥
सबन्धुविषयसम्भूता देशाख्यां सैन्धवीं विदुः ।

उदाहरणं — सारी । मामा । माधापापापागा । पामागारी । पामागारी । सनी । साधासारीमरीमा । मामाधा-पापा । पाधमापाधापामागारीसनीसासा । सैन्धवी ।

षड्जाद्यन्तसमायुक्ता सम्पूर्णदेशसम्भवा ।
+ + + षड्जासंवादो द्विश्रुतिचाल्परूपिणौ (?) ॥
साधारणकृता ह्येषा आभीरी गीयते जनैः ।

उदाहरणं — सासारीरी । सासारीरी । सासारीसारी । सासानीसारीरी । सारीसारीसासानीसरीरीगारिगारी । सनिसासा । गारीरी । गामागरी । गपापगारी । सनिसासा । सनीसासाधारीगगमासा । पमागारी । सनीसासा । धनीधानी । साधनिसा । रिरिगामा । गामारिरि । गापामापा । मागारीरी । सासारिसारी । सासानीसारी । रीरीसासासानिरीरिगारि । रिगागिरि । सनि । सासागारीरि । गामगारी । सानि । गारीरी । मागागारी । गापागारी । सनीसासासनी । सासा । रिगगमासा । पमागारी । सनिसासा । सधनिसासा । सनिधानिधाधनिसारीरी । गामागमारिरी । गापामापा । मपमा । मगारिरी । मपागारि । सनिसासा । आभीरी ।

खण्डनी पञ्चमांशा तु षड्जान्ता धैवतोज्झिता ।
षड्जनिषादसंवादो मध्यमर्षभयोस्तथा ॥
सङ्कीर्णा षाडवा ज्ञेया सर्वलोकस्य रञ्जिका ।

उदाहरणं — पानीमारीसरि । सासासरीरि । सनि । रिरी । सनिसनि । रि । पापापानि । सरिसनि । सगससा । सनिरीसनीरीरी । मागारिगमा । नीपापानीसनीपापामग । पापा । नि । निमनिसरिसगसासा । खण्डनी ।

निषादांशा तु षड्जान्ता गूर्जरीदेशसम्भवा ।
निषादर्षभसंयोगो मध्यमर्षभयोस्तथा ॥
संपूर्णा चैव विज्ञेया षाडवा गेयवेदिभिः ॥

उदाहरणं — निधानीनी । रिगानिधा । निसासाधनि । धाग । रि । सागरी । सानीधानी । गधासारी । गारीमागारी । सनिधाधानिधासरिगारी । सनीसासा । निधासानीगरी । मगरि । मगारि । पापागारीमामा । रिधानिधानिधासरि । गरिसानीसासानीधासरीरि । निधासासा । धनीसागा । गारीरि । मगरीमगरि । मापागरि । मगरिसनी । धाधानिधासरिगरि । सनिसासा ।

एता याष्टिकेन प्रयुक्ताः ।

अथ ककुभे —

धैवताद्यन्तसंयुक्ता काम्बोजा पूर्णसुस्वरा ।
षड्जधैवतसंवादः पञ्चमर्षभयोस्तथा ॥
एषा भाषा तु देशाख्या प्रथमा ककुभोद्भवा ।

उदाहरणं — धासागागा । मागारीसासासानिसासा । धापापा । धामासारिगा । मागारीसासा । सनिधाधापापामधानिरिसनिधाधा ।

मध्यमांशा धैवतान्ता पूर्वमध्यमग्रामिका ।
परस्परं तु दृश्येत सहितावृषभधैवतौ ॥
एषा भाषा च सङ्कीर्णा रम्या ककुभसंभवा ।

उदाहरणं — मामा । गरिधासारीसामा । निगरिसनिसानिधा । साधासाधनिरिसा । धनिरिरि । मापाप-

मागा । रिरिरिरि । गाम । गाम । धाधामापामागारीसा-
साधा धधध । मध्यमग्रामिका ।

ऋषभांशा धैवतान्ता विज्ञेया सातवाहिनी ।
परस्परं तु दृश्यन्ते मध्यमर्षभसङ्गतौ ॥
सप्तमं किञ्चिदिच्छन्ति केचित् तेनैव दुर्बलम् ।

उदाहरणं — गधरिरिमा । मामानिमाधाधधाधा-
पमपममरिममासरि । मामपपामपपापापापमरिमरिमामासरि ।
पापपससानि । धाधरि । सासासासारीमनिधाधाधापधा-
साधपाधापमपापामरिमामासारिमापापामासानिधाधा । सात-
वाहिनी ।

मध्यमांशा निषादान्ता ऋषभेण तु दुर्बला ॥
सङ्गतिर्दृश्यते यत्र द्विश्रुत्योः पञ्चमस्य च ।
भाषेयं षाडबा ज्ञेया ककुभे भोगवर्धनी ॥

उदाहरणं — निनी । गगमा । पामापमा । धाधा ।
सानिसनि । धपधाधपमापाम । गगगग । मपधाधानी ।
ससस । मागसानिधाधाधा । भोगवर्धनी ।

पञ्चमांशा तेन बहुला + + मधुकरी शुभा ।
परस्परं तु संवादो गान्धारे पञ्चमस्य तु ॥
धैवत + निषाद + संयोगो दृश्यते यतः ।
एषा पूर्णा च सङ्कीर्णा भाषा ककुभसंभवा ॥

उदाहरणं — निनिनिनिपधपाधनिसासनिसनि ।
सपधानिधाधपाधरिसासागरिमगरिससम । गरिसानिनिनि-

धपापासागा । पापामाधा । माधाधामा । नीसासाधाधा । मधुकरी ।

निषादांशा तु षड्जान्ता + + + + + + + + + ।
+ + ऋषभहीना तु विज्ञेया शकमिश्रिता ।
निषादपञ्चमानां तु संवादः स्याच्चु धैवते ॥
मजुवल्यंशजा छाया छाया शकविमिश्रिता ।

उदाहरणं— नीसानिगधमागारि रिनिनिनिनिसाधाधा-निधागमामामपासासनिसासाधाधामनीधाधामानीधापामाधा-नीसासासानीसा सासारिगारीसानीसानीसानिधाधामासानी - मागारीरि । शकमिश्रिता ।

धैवतांशा मध्यमांशा विज्ञेया भिन्नपञ्चमी ।
निषादः काकली भूयो धैवतेन विमिश्रितः ॥
संयोगो दृश्यते यत्र काक(ल्योधै ? ल्या धै)वतस्य च ।
पञ्चमर्षभसंवादो यत्रैत्र संप्रयोजयेत् ॥
साधारणकृता ह्येषा पूर्णा छाया च काकली ।

उदाहरणं — धनिधाधानिधापापामरिपापापपमाधा-धापासासनिसासनिरिरिसारी । धाधा । परिमापापा । पमधा-धामानीधापापापरीधापापापाधाधासनिधा । भिन्नपञ्चमी ।

एता भा(षा)स्समुद्दिष्टा अथ भिन्दोलके + + ॥
षड्जांशन्याससंयुक्ता धैवतेन च दुर्बला ।
षड्जगान्धारसञ्चारस्तत्र यो(न्य ? ज्य:)प्रयोक्तृभिः ॥

उदाहरणं — सासागासासनिपानि । माधामागास-मासासासा । समगासपमरिगासानिनिमासागासासा । धानि-पापापनिसागा ।

गान्धारस्य प्रयोगेण भाषेयं तस्य वैसरी ।
पञ्चमांशा ऋषभहीना षड्जान्ता षाडबा भवेत् ॥

षड्जपञ्चमसञ्चारो द्विश्रुतीनां तथैव च ।
भाषा भिन्दोलके ह्येषा कथिता प्रथममञ्जरी ॥

उदाहरणं — पापापापाधमपानीसापञ्चमपाधनि धा-सासापापानिसासासागासापागामानिसनिपापानिसापानिसा-गानिसानिसासा । प्रथममञ्जरी ।

षड्जांशन्याससंयुक्ता संपूर्णा धेन दुर्बला ।
संवादश्चैव कर्तव्यः षड्जमध्यमयोस्तथा ॥

षड्जगान्धारयोर्नित्यं चेवाटी संप्रकीर्त्तिता ।

उदाहरण—सापासा । मागासासागामनिमापामासा-सामामानीमामानीमामानीमामापापागामासासासागासनी । सागासानीसनिधामधामापापापाधामामाधमपमगरिसासानी-नीनीसागारीमामारीनीसासा । छेवादी

षड्जांशा मध्यमान्ता च निषादर्षभदुर्बला ।
षड्जमध्यमसंवादस्तथा गान्धारपञ्चमे ॥

षाडबौडुबिता ज्ञेया प्रकृत्या षड्जमध्यमा ।
एषा भाषा तु कथिता किन्नरैरपि गीयते ॥

उदाहरणं — सापापाधामामापागामगापधाधापाग-मागापापापाधापासासापाधापमगामामागामसासासागागामा-गामामा । षड्ज + + + ।

मध्यमांशा तु षड्जान्ता दुर्बला पञ्चमेन तु ।
धैवतनिषादबाहुल्यं षड्जधैवतयोस्तथा ॥
भाषेयं षाडबा ज्ञेया प्रेक्षके मधुकरी भवेत् ।

उदाहरणं — मापापाधाधामाधनिनिपासानिधसासा-मापाधनिसनिसासामापानिसासारिरीगमगारीसासानिधापापा-पाधनिधा सासारिरीगमागरिसासा । मधु(क)री ॥

इति हिन्दोलके भाषा समाप्ता ।

---

अतःपरं प्रवक्ष्यामि पञ्चमषाडबे भाषाः ।
पञ्चमांशा तदन्ता च निषादबहुला सदा ॥
परस्परं तु दृश्येत षड्जधैवतसङ्गतिः ।
पूर्णपञ्चमजा ह्येषा आभीरीदेशसम्भवा ।
एषा भाषा तु विज्ञेया प्रथमा पञ्चमोद्भवा ॥

उदाहरणं — पाधामाधनिधापापापापधनिधामामा-धानिसासासनिधनिसधानिसानिधासाधरिमामाधानिनिधापा-पापममधनिसासासनिनिसासासनिगरिममगारिससधनि-पाधामामासरिमाधारिमपापा । आभीरी ।

भाविनी पञ्चमन्यासा गान्धारांशाल्पधैवता ।
मध्यमपञ्चमयोर्यत्र गमनं दृश्यते घनम् ॥
भाषा तु भाविनी ज्ञेया पूर्णा गान्धर्ववेदिभिः ।

उदाहरणं — गामापागमपानिधा । गमपामागागारी-रीगानीधापापापापा । मामागामापापामापापामाधारीसगग-मापामागारीरीपापा । भाविनी ।

माङ्गाली पञ्चमान्ता च धैवतांशा प्रकीर्तिता ।
षड्जधैवतसंवादो मध्यमर्षभयोस्तथा ॥
सङ्कीर्णा च मता नित्यं ज्ञेया वैदेशसम्भवा ।
एषा भाषा च गीतज्ञैरुक्ता पञ्चमसम्भवा ॥

उदाहरणं — सासासासधासारिरिधासारिरिधासाधा-साधासासारिमारिमामामधमधपापापाधामपापमसासा।निधसा-रिरिमागरिसासारिमारिमाममधमपपापापामापापमसासानिध-ससारिरिगारिमारीसाधासासाधमासासासासाम। पमामापापा। माङ्गाली ।

पञ्चमांशा तदन्ता च संपूर्णा पञ्चमोज्ज्वला ।
सैन्धवी षड्जसंभूतां विभाषां सैन्धवीं विदुः ॥
षड्जपञ्चमसंवादो दृश्यते च मुहुर्मुहुः ।

उदाहरणं — पापाधसारिगागागरिमारि। ससानिधा-धासनिधाधामसरिगागागरिसाधाधपापाधापाधसारिगारिपपा-रिगागारिरीसाधासाधापामापापाधापाधापामामामापाधाधासा-रीरिसाधापामापापा । सैन्धवी ।

